अथ चित्रग्रीवो बिलमासाद्य तारस्वरेण प्रोवाच—'भो ! भो ! मित्र हिरण्यक ! सत्वरमागच्छ, महती मे [1]व्यसनावस्था वर्तते'। तच्छ्रुत्वा हिरण्यकोऽपि बिलदुर्गान्तर्गतः सन्प्रोवाच—'भोः ! को भवान् ? किमर्थमायातः ? किं कारणम् ? कीदृक्ते व्यसनावस्थानम् ? तत्कथ्यताम्' इति। तच्छ्रुत्वा चित्रग्रीव आह—'भोः ! चित्रग्रीवो नाम कपोतराजोऽहं ते सुहृत्। तत्सत्वरमागच्छ, गुरुतरं प्रयोजनमस्ति। तदाकर्ण्य पुलकिततनुः प्रहृष्टात्मा स्थिरमनास्त्वरमाणो निष्क्रान्तः। अथवा साध्विदमुच्यते—

सुहृदः स्नेहसंपन्ना लोचनानन्ददायिनः।
गृहे गृहवतां नित्यमागच्छन्ति महात्मनाम् ॥ १७ ॥
आदित्यस्योदयस्तात ताम्बूलं भारती कथा।
इष्टा भार्या सुमित्रं च अपूर्वाणि दिने दिने ॥ १८ ॥
सुहृदो भवने यस्य समागच्छन्ति नित्यशः।
चित्ते च तस्य सौख्यस्य न किंचित्प्रतिमं सुखम् ॥१९॥

अथ चित्रग्रीवं सपरिवारं पाशबद्धमालोक्य हिरण्यकः सविषादमिदमाह—'भोः ! किमेतत्।' स आह—'भोः' जानन्नपि किं पृच्छसि। उक्तं च यतः—

यस्माच्च येन च यदा च यथा च यच्च
यावच्च यत्र च शुभाशुभमात्मकर्म।
तस्माच्च तेन च तदा च तथा च तच्च
तावच्च तत्र च कृतान्तवशादुपैति ॥ २० ॥

तत्प्राप्तं मयैतद्बन्धनं जिह्वालौल्यात्। सांप्रतं त्वं सत्वरं पाशविमोक्षं कुरु।' तदाकर्ण्य हिरण्यकः प्राह—

---

१ आपदवस्था।

'अर्धार्धाद्योजनशतादामिषं वीक्षते खगः ।
सोऽपि पार्श्वस्थितं दैवाद्बन्धनं न च पश्यति ॥ २१ ॥

तथा च—

रविनिशाकरयोर्ग्रहपीडनं
गजभुजङ्गविहङ्गमबन्धनम् ।
मतिमतां च निरीक्ष्य दरिद्रतां
विधिरहो बलवानिति मे मतिः ॥ २२ ॥

तथा च—

व्योमैकान्तविहारिणोऽपि विहगाः संप्राप्नुवन्त्यापदं
बध्यन्ते निपुणैरगाधसलिलान्मीनाः समुद्रादपि ।
दुर्णीतं किमिहास्ति किञ्च सुकृतं कः स्थानलाभे गुणः
कालः सर्वजनान्प्रसारितकरो गृह्णाति दूरादपि ॥२३॥

एवमुक्त्वा चित्रग्रीवस्य पाशं छेत्तुमुद्यतं स तमाह—'भद्र, मा मैवं कुरु । प्रथमं मम भृत्यानां पाशच्छेदं कुरु । तदनु ममापि च ।' तच्छ्रुत्वा कुपितो हिरण्यकः प्राह—'भोः, न युक्तमुक्तं भवता । यतः [1]स्वामिनोऽनन्तरं भृत्याः ।' स आह—'भद्र, मा मैवं वद । मदाश्रयाः सर्वं एते वराकाः अपरं स्वकुटुम्बं परित्यज्य समागताः । तत्कथमेतावन्मात्रमपि सम्मानं न करोमि ।

उक्तं च—

यः सम्मानं सदा धत्ते भृत्यानां क्षितिपोऽधिकम् ।
वित्ताभावेऽपि तं दृष्ट्वा ते त्यजन्ति न कर्हिचित् ॥२४॥

---

१ स्वामिनः प्रभोः अनन्तरं पश्चादेव । प्रथमं भृत्या रक्षणीया इत्यर्थः । नीतिस्तु तावदीदृशी वर्तते यद् आदौ प्रभवः संरक्षणीयाः, ततः सेवकाः, रक्षणीयाः, रक्षके रक्षिते एव सर्वेषां रक्षणं सम्भवति त्वया तु सर्वथा तद्विरुद्धमुच्यत इत्यर्थः ।

तथा च---

विश्वासः संपदां मूलं तेन यूथपतिर्गजः ।
सिंहो मृगाधिपत्येऽपि न मृगैः परिवार्यते ॥ २५ ॥

अपरं मम कदाचित्पाशच्छेदं कुर्वतस्ते दन्तभङ्गो भवति । अथवा दुरात्मा लुब्धकः समभ्येति । तन्नूनं मम नरकपात एव । उक्तं च—

सदाचारेषु भृत्येषु संसीदत्सु च यः प्रभुः ।
सुखी स्यान्नरकं याति परत्रेह च सीदति ॥ २६ ॥

तच्छ्रुत्वा प्रहृष्टो हिरण्यकः प्राह—'भोः, वेद्म्यहं राजधर्मम् । परं मया तव परीक्षा कृता । तत्सर्वेषां पूर्वं पाशच्छेदं करिष्यामि ।

भवानप्यनेन विधिना बहुकपोतपरिवारो भविष्यति । उक्तं च—

कारुण्यं संविभागश्च यस्य भृत्येषु सर्वदा ।
सम्भवेत्स महीपालस्त्रैलोक्यस्यापि रक्षणे ॥ २७ ॥

एवमुक्त्वा सर्वेषां पाशच्छेदं कृत्वा हिरण्यकश्चित्रग्रीवमाह—'मित्र, गम्यतामधुना स्वाश्रयं प्रति । भूयोऽपि व्यसने प्राप्ते समागन्तव्यम्' इति । तान्संप्रेष्य पुनरपि दुर्गं प्रविष्टः । चित्रग्रीवोऽपि सपरिवारः स्वाश्रयमगमत् । अथवा साध्विदमुच्यते—

मित्रवान्साधयत्यर्थान्दुःसाध्यानपि वै यतः ।
तस्मान्मित्राणि कुर्वीत समानान्येव चात्मनः ॥ २८ ॥

लघुपतनकोऽपि वायसः सर्वं तं चित्रग्रीवबन्धमोक्षमवलोक्य विस्मितमना व्यचिन्तयत्—'अहो, बुद्धिरस्य हिरण्यकस्य शक्तिश्च [1]दुर्गसामग्री च । [2]तदीदृगेव विधिर्विहङ्गानां बन्धनमो-

---

१ दुर्गरक्षणोपायसमूहः । २ ईदृगेव विधिः ईदृशैः सहैव मैत्रीकरणस्य विधानं वर्तते ।

क्षात्मकः । अहं च न कस्यचिद्विश्वसिमि [1]चलप्रकृतिश्च । तथापृयेनं मित्रं करोमि । उक्तं च—

अपि संपूर्णतायुक्तैः कर्तव्याः सुहृदो बुधैः ।
नदीशः परिपूर्णोऽपि चन्द्रोदयमपेक्षते' ॥ २९ ॥

एवं [2]संप्रधार्य पादपादवतीर्य बिलद्वारमाश्रित्य चित्रग्रीववच्छब्देन हिरण्यकं समाहूतवान्—'एह्येहि भो हिरण्यक! एहि ।' तच्छब्दं श्रुत्वा हिरण्यको व्यचिन्तयत्—'किमन्योऽपि कश्चित्कपोतो [3]बन्धनशेषस्तिष्ठति येन मां व्याहरति ।' आह च—'भोः, को भवान् ।' स आह—'अहं लघुपतनको नाम वायसः ।' तच्छ्रुत्वा [4]विशेषादन्तर्लीनो हिरण्यक आह—'भोः, द्रुतं गम्यतामस्मात्स्थानात् ।' वायस आह—'अहं तव पार्श्वे गुरुकार्येण समागतः । तत्किं न क्रियते मया सह दर्शनम् ।' हिरण्यक आह—'न मेऽस्ति त्वया सह संगमेन प्रयोजनम्' इति । स आह—'भोः, चित्रग्रीवस्य मया तव सकाशात्पाशमोक्षणं दृष्टम् । तेन मम महती प्रीतिः संजाता । तत्कदाचिन्ममापि बन्धने जाते तव पार्श्वान्मुक्तिर्भविष्यति । तत्क्रियतां मया सह मैत्री ।' हिरण्यक आह—'अहो, त्वं भोक्ता । अहं ते भोज्यभूतः । तत्का त्वया सह मम मैत्री । तद्गम्यताम्, [5]मैत्री विरोधभावात्कथम् । उक्तं च—

ययोरेव समं वित्तं ययोरेव समं कुलम् ।
तयोर्मैत्री विवाहश्च न तु पुष्टविपुष्टयोः ॥ ३० ॥

तथा च—

यो मित्रं कुरुते मूढ आत्मनोऽसदृशं कुधीः ।
हीनं वाप्यधिकं वापि हास्यतां यात्यसौ जनः ॥ ३१ ॥

---

१ चञ्चलस्वभावः । २ निश्चित्य । ३ बन्धनाद् अवशिष्टः । ४ अभ्यन्तरगतः । ५ मैत्री सौहार्दं, विरोधभावात् शत्रुतासत्वात् कथं सम्भवति, विरोधिना सह मैत्री कथमपि न विधेयेत्याशयः ।

तद्गम्यताम्' इति । वायस आह—'भो हिरण्यक, एषोऽहं तव दुर्गद्वार उपविष्टः । यदि त्वं मैत्रीं न करोषि ततोऽहं [1]प्राणमोक्षणं तवाग्रे करिष्यामि । अथवा [2]प्रायोपवेशनं मे स्यात्' इति । हिरण्यक आह—'भोः, त्वया वैरिणा सह कथं मैत्रीं करोमि । उक्तं च—

वैरिणा न हि संदध्यात्सुश्लिष्टेनापि संधिना ।
सुतप्तमपि पानीयं शमयत्येव पावकम् ॥ ३२ ॥

वायस आह—'भोः, त्वया सह दर्शनमपि नास्ति । कुतो वैरम् । तत्किमनुचितं वदसि' । हिरण्यक आह—'द्विविधं वैरं भवति । [3]सहजं कृत्रिमं च । तत्सहजवैरी त्वमस्माकम् । उक्तं च—

कृत्रिमं नाशमभ्येति वैरं द्राक् कृत्रिमैर्गुणैः ।
प्राणदानं विना वैरं सहजं याति न क्षयम्' ॥ ३३ ॥

वायस आह—'भोः, द्विविधस्य वैरस्य लक्षणं श्रोतुमिच्छामि । तत्कथ्यताम् ।' हिरण्यक आह—'भोः, कारणेन निर्वृत्तं कृत्रिमम् । [4]तत्तदर्होपकारकरणाद्गच्छति । स्वाभाविकं पुनः कथमपि न गच्छति । तद्यथा—'नकुलसर्पाणाम्, [5]शष्पभुङ्नखायुधानाम्, जलवह्न्योः, देवदैत्यानाम्, सारमेयमार्जाराणाम्, ईश्वरदरिद्राणाम्, सपत्नीनाम्, सिंहगजानाम्, लुब्धकहरिणानाम्, श्रोत्रियभ्रष्टक्रियाणाम्, मूर्खपण्डितानाम्, पतिव्रताकुलटानाम्, सज्जनदुर्जनानाम् । न कश्चित्केनापि

१ प्राणत्यागमित्यर्थः । २ अनशनव्रतम् । ३ सहजं स्वाभाविकं, कृत्रिमं कार्यवशाज्जातम् । ४ तत् कृत्रिमं वैरं तदर्होपकरणात् येन हेतुना वरं समुत्पन्नं तस्य यथोचितप्रतीकारविधानादिति भावः । ५ तृणभोजिनां नखशस्त्राणां पक्षिणामित्यर्थः ।

व्यापादितः तथापि प्राणान्सन्तापयन्ति ।' वायस आह—'भोः, अकारणमेतत् । श्रूयतां मे वचनम्—

कारणान्मित्रतां याति कारणादेति शत्रुताम् ।
तस्मान्मित्रत्वमेवात्र योज्यं वैरं न धीमता ॥ ३४ ॥

तस्मात्कुरु मया सह समागमं मित्रधर्मार्थम् ।' हिरण्यक आह—'भोः, श्रूयतां नीतिसर्वस्वम्—

सकृद् दुष्टमपीष्टं यः पुनः सन्धातुमिच्छति ।
स मृत्युमुपगृह्णाति गर्भमश्वतरी यथा ॥ ३५ ॥

अथवा गुणवानहम्, न मे कश्चिद्वैरयातनां करिष्यति, एतदपि न संभाव्यम् । उक्तं च—

सिंहो व्याकरणस्य कर्तुरहरत्प्राणान्प्रियान्पाणिने-
र्मीमांसाकृतमुन्ममाथ सहसा हस्ती मुनिं जैमिनिम् ।
छन्दो ज्ञाननिधिं जघान मकरो वेलातटे पिङ्गल-
मज्ञानावृतचेतसामतिरुषां कोऽर्थस्तिरश्चां गुणैः ॥ ३६ ॥

वायस आह—'अस्त्येतत् । तथापि श्रूयताम्—

उपकाराच्च लोकानां निमित्तान्मृगपक्षिणाम् ।
भयाल्लोभाच्च मूर्खाणां मैत्री स्याद्दर्शनात्सताम् ॥ ३७ ॥
मृद्घट इव सुखभेद्यो दुःसंधानश्च दुर्जनो भवति ।
सुजनस्तु कनकघट इव दुर्भेदः सुकरसंधिश्च ॥ ३८ ॥
इक्षोरग्रात्क्रमशः पर्वणि पर्वणि यथा रसविशेषः ।
तद्वत्सज्जनमैत्री विपरीतानां तु विपरीता ॥ ३९ ॥

तथा च—

आरम्भगुर्वी क्षयिणी क्रमेण
लघ्वी पुरा वृद्धिमती च पश्चात् ।
दिनस्य पूर्वार्धपरार्धभिन्ना
छायेव मैत्री खलसज्जनानाम् ॥ ४० ॥

तत्साधुरहम् । अपरं त्वां शपथादिभिर्निर्भयं करिष्यामि । स आह—'न मेऽस्ति ते शपथैः प्रत्ययः । उक्तं च—

शपथैः संधितस्यापि न विश्वासं व्रजेद्रिपोः ।
श्रूयते शपथं कृत्वा वृत्रः शक्रेण सूदितः ॥ ४१ ॥
न विश्वासं विना शत्रुर्देवानामपि सिध्यति ।
विश्वासात्त्रिदशेन्द्रेण दितेर्गर्भो विदारितः ॥ ४२ ॥

अन्यच्च—

बृहस्पतेरपि प्राज्ञस्तस्मान्नैवात्र विश्वसेत् ।
य इच्छेदात्मनो वृद्धिमायुष्यं च सुखानि च ॥ ४३ ॥

तथा च—

सुसूक्ष्मेणापि रन्ध्रेण प्रविश्याभ्यन्तरं रिपुः ।
नाशयेच्च शनैः पश्चात्प्लवं सलिलपूरवत् ॥ ४४ ॥
न विश्वसेदविश्वस्ते विश्वस्तेऽपि न विश्वसेत् ।
विश्वासाद्भयमुत्पन्नं मूलान्यपि निकृन्तति ॥ ४५ ॥
न वध्यते ह्यविश्वस्तो दुर्बलोऽपि मदोत्कटैः ।
विश्वस्ताश्चाशु वध्यन्ते बलवन्तोऽपि दुर्बलैः ॥ ४६ ॥
सुकृत्यं विष्णुगुप्तस्य मित्राप्तिर्भार्गवस्य च ।
बृहस्पतेरविश्वासो नीतिसंधिस्त्रिधा स्थितः ॥ ४७ ॥

तथा च—

महताप्यर्थसारेण यो विश्वसिति शत्रुषु ।
भार्यासु सुविरक्तासु तदन्तं तस्य जीवितम् ॥ ४८ ॥

तच्छ्रुत्वा लघुपतनकोऽपि निरुत्तरश्चिन्तयामास—'अहो, बुद्धिप्रागल्भ्यमस्य नीतिविषये । अथवात एवास्योपरि मैत्रीपक्षपातः ।' स आह—'भो हिरण्यक,

सतां साप्तपदं मैत्रमित्याहुर्विबुधा जनाः ।
तस्मात्त्वं मित्रतां प्राप्तो वचनं मम तच्छृणु ॥ ४९ ॥

[1]दुर्गस्थेनापि त्वया मया सह नित्यमेवालापो [2]गुणदोष-सुभाषितगोष्ठीकथाः सर्वदा कर्त्तव्याः, यद्येवं न विश्वसिषि ।' तच्छ्रुत्वा हिरण्यकोऽपि व्यचिन्तयत्—'[3]विदग्धवचनोऽयं दृश्यते लघुपतनकः सत्यवाक्यश्च, तद्युक्तमनेन मैत्रीकरणम् । परं कदाचिन्मम दुर्गे चरणपातोऽपि न कार्यः । उक्तञ्च—

भीतभीतः पुरा शत्रुर्मन्दं मन्दं विसर्पति ।
भूमौ प्रहेलया पश्चाज्जारहस्तोऽङ्गनास्विव' ॥ ५० ॥

तच्छ्रुत्वा वायस आह—'भद्र, एवं भवतु ।' ततः प्रभृति द्वौ तावपि सुभाषितगोष्ठीसुखमनुभवन्तौ तिष्ठतः । परस्परं कृतोपकारौ कालं नयतः । लघुपतनकोऽपि [4]मांसशकलानि [5]मेध्यानि [6]बलिशेषारण्यान्यानि वात्सल्याहृतानि पक्वान्नविशेषा-णि हिरण्यकार्थमानयति ।

हिरण्यकोऽपि तण्डुलानन्यांश्च भक्ष्यविशेषांल्लघुपतनकार्थं रात्रावाहृत्य तत्कालायातस्यार्पयति । अथवा युज्यते द्वयो-रप्येतत् ।

उक्तञ्च—

ददाति प्रतिगृह्णाति गुह्यमाख्याति पृच्छति ।
भुङ्क्ते भोजयते चैव षड्विधं प्रीतिलक्षणम् ॥ ५१ ॥
नोपकारं विना प्रीतिः कथंचित्कस्यचिद्भवेत् ।
उपयाचितदानेन यतो देवा अभीष्टदाः ॥ ५२ ॥
तावत्प्रीतिर्भवेल्लोके यावद्दानं प्रदीयते ।
वत्सः क्षीरक्षयं दृष्ट्वा परित्यजति मातरम् ॥ ५३ ॥

१ बिलस्थितेन । २ गुणदोषाणां सुभाषितेन गोष्ठीकथाः सम्मेलनालापाः । ३ विदग्धस्य पण्डितस्य इव वचनं यस्य तथाभूतः । ४ मांसखण्डानि । ५ पवित्राणि । ६ पूजातोऽवशिष्टानि ।

पश्य दानस्य माहात्म्यं सद्यः प्रत्ययकारणम् ।
यत्प्रभावादपि द्वेषी मित्रतां याति तत्क्षणात् ॥ ५४ ॥

पुत्रादपि प्रियतरं खलु तेन दानं
मन्ये पशोरपि विवेकविवर्जितस्य ।
दत्ते खले नु निखिलं खलु येन दुग्धं
नित्यं ददाति महिषी ससुतापि पश्य ॥ ५५ ॥

किं बहुना—

प्रीतिं निरन्तरां कृत्वा दुर्भेद्यां नखमांसवत् ।
मूषको वायसश्चैव गतौ कृत्रिममित्रताम् ॥ ५६ ॥

एवं स मूषकस्तदुपकाररञ्जितस्तथा विश्वस्तो यथा तस्य पक्षमध्ये प्रविष्टस्तेन सह सर्वदैव [1]गोष्ठीं करोति । अथान्यस्मिन्नहनि वायसोऽश्रुपूर्णनयनः समभ्येत्य सगद्गदं तमुवाच —'भद्र हिरण्यक, विरक्तिः संजाता मे सांप्रतं देशस्यास्योपरि तदन्यत्र यास्यामि ।' हिरण्यक आह—'भद्र, किं विरक्तेः कारणम् ।' स आह—'भद्र, श्रूयताम् । अत्र देशे महत्यानावृष्ट्या दुर्भिक्षं संजातम् । दुर्भिक्षत्वाज्जनो बुभुक्षापीडितः कोऽपि [2]बलिमात्रमपि न प्रयच्छति । अपरं गृहे गृहे बुभुक्षितजनैर्विहङ्गानां बन्धनाय पाशाः [3]प्रगुणीकृताः सन्ति । अहमप्यायुःशेषतया पाशेन बद्ध [4]उद्धारितोऽस्मि । एतद्विरक्तेः कारणम् । तेनाहं विदेशं चलित इति बाष्पमोक्षं करोमि ।' हिरण्यक आह —अथ भवान् क्व प्रस्थितः । स आह—'अस्ति दक्षिणापथे वनगहनमध्ये महासरः । तत्र त्वत्तोऽधिकः परमसुहृत्कूर्मो मन्थरको नाम । स च मे मत्स्यमांसखण्डानि दास्यति ।

१ परस्परं सम्मेलनरूपां सभाम् । २ काकेभ्यः बलिमपि । ३ सज्जीकृत्य स्थापिताः । ४ उन्मुक्तोऽस्मि ।

तद्भक्षणात्तेन सह सुभाषितगोष्ठीसुखमनुभवन्सुखेन कालं नेष्यामि। नाहमत्र विहङ्गानां पाशबन्धनेन क्षयं द्रष्टुमिच्छामि ।

उक्तं च—

अनावृष्टिहते देशे शस्ये च प्रलयं गते ।
धन्यास्तात ? न पश्यन्ति देशभङ्गं कुलक्षयम् ॥ ५७ ॥
कोऽतिभारः समर्थानां किं दूरं व्यवसायिनाम् ।
को विदेशः सविद्यानां कः परः प्रियवादिनाम् ॥ ५८ ॥
विद्वत्त्वं च नृपत्वं च नैव तुल्यं कदाचन ।
स्वदेशे पूज्यते राजा विद्वान्सर्वत्र पूज्यते' ॥ ५९ ॥

हिरण्यक आह—'यद्येवं तदहमपि त्वया सहागमिष्यामि । ममापि महद्दुःखं वर्तते'। वायस आह—'भोः, तव किं दुःखम् । तत्कथय ।' हिरण्यक आह —'भो, बहु वक्तव्यमस्त्यत्र विषये। तत्रैव गत्वा सर्वं सविस्तरं कथयिष्यामि ।' वायस आह—'अहं [1]तावदाकाशगतिः । तत्कथं भवतो मया सह गमनम् ।' स आह—'यदि मे प्राणान्रक्षसि तदा स्वपृष्ठमारोप्य मां तत्र प्रापय, नान्यथा मम गतिरस्ति ।' तच्छ्रुत्वा सानन्दं वायस आह—'यद्येवं तद्धन्योऽहं यद्भवतापि सह तत्र कालं नयामि । अहं संपातादिकानष्टावुड्डीनगतिविशेषान्वेद्मि । तत्समारोह मम पृष्ठम्, येन सुखेन त्वां तत्सरः प्रापयामि ।' हिरण्यक आह—'उड्डीनानां नामानि श्रोतुमिच्छामि।' स आह—

'संपातं विप्रपातं च महापातं निपातनम् ।
वक्रं तिर्यक्तथा चोर्ध्वमष्टमं लघुसंज्ञकम्' ॥ ६० ॥

तच्छ्रुत्वा हिरण्यकस्तत्क्षणादेव तदुपरि समारूढः। सोऽपि शनैः शनैस्तमादाय [2]सम्पातोड्डीनप्रस्थितः सन् क्रमेण तत्सरः प्राप्तः। ततो लघुपतनकं मूषकाधिष्ठितं विलोक्य दूरतोऽपि

१ आकाशचरः। २ सम्पातरूपेणोड्डीनेन उड्डीनगतिभेदेन प्रस्थितः ।

देशकालविदसामान्यकाकोऽयमिति ज्ञात्वा सत्वरं मन्थरको जले प्रविष्टः । लघुपतनकोऽपि तीरस्थतरुकोटरे हिरण्यकं मुक्त्वा शाखाग्रमारुह्य [1]तारस्वरेण प्रोवाच—'भो मन्थरक, आगच्छागच्छ । तव मित्रमहं लघुपतनको नाम वायसश्चिरात्सोत्कण्ठः समायातः । तदागत्यालिङ्गय माम् । उक्तं च—

किं चन्दनैः सकर्पूरैस्तुहिनैः किं च शीतलैः ।
सर्वे ते मित्रगात्रस्य कलां नार्हन्ति षोडशीम् ॥ ६१ ॥

तथा च—

केनामृतमिदं सृष्टं मित्रमित्यक्षरद्वयम् ।
आपदां च परित्राणं शोकसंतापभेषजम् ॥ ६२ ॥

तच्छ्रुत्वा निपुणतरं परिज्ञाय सत्वरं सलिलान्निष्क्रम्य पुलकिततनुरानन्दाश्रुपूरितनयनो मन्थरकः प्रोवाच—'एह्येहि मित्र, आलिङ्गय माम् । चिरकालान्मया त्वं न सम्यक्परिज्ञातः । तेनाहं सलिलान्तः प्रविष्टः । उक्तं च—

यस्य न ज्ञायते वीर्यं न कुलं न विचेष्टितम् ।
न तेन संगतिं कुर्यादित्युवाच बृहस्पतिः' ॥ ६३ ॥

एवमुक्ते लघुपतनको वृक्षादवतीर्य तमालिङ्गितवान् । अथवा साध्विदमुच्यते—

अमृतस्य प्रवाहैः किं कायक्षालनसंभवैः ।
चिरान्मित्रपरिष्वङ्गो योऽसौ मूल्यविवर्जितः ॥ ६४ ॥

एवं द्वावपि तौ विहितालिङ्गनौ परस्परं पुलकितशरीरौ वृक्षादधः समुपविष्टौ प्रोचतुरात्मचरित्रवृत्तान्तम् । हिरण्यकोऽपि मन्थरस्य प्रणामं कृत्वा वायसाभ्याशे समुपविष्टः । अथ तं समालोक्य मन्थरको लघुपतनकमाह—'भोः, कोऽयं मूषकः । कस्मात्त्वया भक्ष्यभूतोऽपि पृष्ठमारोप्यानीतः । तन्नात्र

1 उच्चस्वरेण ।

स्वल्पकारणेन भाव्यम् ।' तच्छ्रुत्वा लघुपतनक आह—'भोः, हिरण्यको नाम मूषकोऽयम् । मम सुहृद् द्वितीयमिव जीवितम् । तत्किं बहुना—

पर्जन्यस्य यथा धारा यथा च दिवि तारकाः ।
सिकतारेणवो यद्वत्संख्यया परिवर्जिताः ॥ ६५ ॥
गुणाः संख्यापरित्यक्तास्तद्वदस्य महात्मनः ।
परं निर्वेदमापन्नः संप्राप्तोऽयं तवान्तिकम् ॥ ६६ ॥

मन्थरक आह—'किमस्य वैराग्यकारणम् ।' वायस आह—'पृष्टो मया । परमनेनाभिहितम्, यद्बहु वक्तव्यमस्ति । तत्तत्रैव गत्वा कथयिष्यामि । ममापि न निवेदितम् । तद्भद्र हिरण्यक, इदानीं निवेद्यतामुभयोरप्यावयोस्तदात्मनो वैराग्यकारणम् । सोऽब्रवीत्—

## कथा (१)

अस्ति दाक्षिणात्ये जनपदे महिलारोप्यं नाम नगरम् । तस्य नातिदूरे [1]मठायतनं भगवतः श्रीमहादेवस्य । तत्र च ताम्रचूडो नाम [2]परिव्राजकः प्रतिवसति स्म । स च नगरे भिक्षाटनं कृत्वा प्राणयात्रां समाचरति । भिक्षाशेषं च तत्रैव भिक्षापात्रे निधाय तद्भिक्षापात्रं [3]नागदन्तेऽवलम्ब्य पश्चाद्रात्रौ स्वपिति । प्रत्यूषे च तदन्नं कर्मकराणां दत्वा सम्यक्तत्रैव देवतायतने संमार्जनोपलेपनमण्डनादिकं समाज्ञापयति । अन्यस्मिन्नहनि मम बान्धवैर्निवेदितम्—'स्वामिन्, मठायतने सिद्धमन्नं मूषकभयात्तत्रैव भिक्षापात्रे निहितं नागदन्तेऽवलम्बितं तिष्ठति सदैव । तद्वयं भक्षयितुं न शक्नुमः । स्वामिनः पुनरगम्यं किमपि नास्ति । तत्किं [4]वृथाटनेनान्यत्र ।

१ मन्दिरम् । २ परि समन्ताद् व्रजतीति परिव्राजकः सन्यासीत्यर्थः । ३ गृहभित्तिस्थिते दण्डविशेषे । ४ व्यर्थभ्रमणेन ।

अद्य तत्र गत्वा यथेच्छं भुञ्जामहे प्रसादात् ।' तदाकर्ण्याहं सकलयूथपरिवृतस्तत्क्षणादेव तत्र गतः । उत्पत्य च तस्मिन् भिक्षापात्रे समारूढः । तत्र भक्ष्यविशेषाणि सेवकानां दत्त्वा पश्चात्स्वयमेव भक्षयामि । सर्वेषां तृप्तौ जातायां भूयः स्वगृहं गच्छामि । एवं नित्यमेव तदन्नं भक्षयामि । परिव्राजकोऽपि यथाशक्ति रक्षति । परं यदैव निद्रान्तरितो भवति, तदाहं तत्रारुह्यात्मकृत्यं करोमि । अथ कदाचित्तेन मम त्रासार्थं महान्यत्नः कृतः । जर्जरवंशः समानीतः । तेन सुप्तोऽपि मम भयाद् भिक्षापात्रं ताडयति । अहमप्यभक्षितेऽप्यन्ने प्रहारभयादपसर्पामि । एवं तेन सह सकलां रात्रिं विग्रहपरस्य[1] कालो व्रजति । अथान्यस्मिन्नहनि तस्य मठे [2]बृहत्स्फिङ्नामा परिव्राजकस्तस्य सुहृत्तीर्थयात्राप्रसङ्गेन पान्थः [3]प्राघुणिकः समायातः । तं दृष्ट्वा प्रत्युत्थानविधिना [4]संभाव्य [5]प्रतिपत्तिपूर्वकमभ्यागतक्रियया नियोजितः । ततश्च रात्रावेकत्र [6]कुशसंस्तरे द्वावपि प्रसुप्तौ धर्मकथां कथयितुमारब्धौ । अथ बृहत्स्फिक्कथागोष्ठीषु स ताम्रचूडो मूषकत्रासार्थं [7]व्याक्षिप्तमना जर्जरवंशेन भिक्षापात्रं ताडयंस्तस्य शून्यं प्रतिवचनं प्रयच्छति । तन्मयो न किंचिदुदाहरति । अथासावभ्यागतः परं कोपमुपागतस्तमुवाच—भोस्ताम्रचूड, परिज्ञातस्त्वं सम्यङ् न सुहृत् । तेन मया सह साह्लादं न जल्पसि । तद्रात्रावपि त्वदीयं मठं त्यक्त्वान्यत्र मठे यास्यामि । उक्तं च—

एह्यागच्छ समाश्रयासनमिदं कस्माच्चिराद् दृश्यसे
का वार्ता ह्यतिदुर्बलोऽसि कुशलं प्रीतोऽस्मि ते दर्शनात् ।

---

१ सङ्ग्रामासक्तस्य । २ बृहन्तौ महान्तौ स्फिचौ नितम्बौ यस्य सः । ३ अतिथिः । ४ सत्कृत्य । ५ सम्मानपुरःसरम् । ६ कुशशय्यायाम् । ७ विक्षिप्तमनाः ।

एवं ये समुपागतान्प्रणयिनः प्रह्लादयन्त्यादरा-
त्तेषां युक्तमशङ्कितेन मनसा हर्म्याणि गन्तुं सदा ॥ ६७ ॥

गृही यत्रागतं दृष्ट्वा दिशो वीक्षेत वाप्यधः ॥
तत्र ये सदने यान्ति ते शृङ्गरहिता वृषाः ॥ ६८ ॥

नाभ्युत्थानक्रिया यत्र नालापा मधुराक्षराः ।
गुणदोषकथा नैव तत्र हर्म्ये न गम्यते ॥ ६९ ॥

तदेकमठप्राप्त्यापि त्वं गर्वितः । त्यक्तः सुहृत्स्नेहः । नैत-द्वेत्सि यत्त्वया मठाश्रयव्याजेन [1]नरकोपार्जनं कृतम् । उक्तं च—

नरकाय मतिस्ते चेत्पौरोहित्यं समाचर ।
वर्षं यावत्किमन्येन मठचिन्तां दिनत्रयम् ॥ ७० ॥

तन्मूर्ख, शोचितव्यस्त्वं गर्वं गतः । तदहं त्वदीयं मठं परित्यज्य यास्यामि ।' अथ तच्छ्रुत्वा भयत्रस्तमनास्ताम्रचूड-स्तमुवाच—'भो भगवन्, मैवं वद । न त्वत्समोऽन्यो मम सुहृत्कश्चिदस्ति । परं तच्छ्रूयतां [2]गोष्ठीशैथिल्यकारणम् । एष दुरात्मा मूषकः प्रोन्नतस्थाने धृतमपि भिक्षापात्रमुत्प्लुत्यारोहति । भिक्षाशेषं च तत्रस्थं भक्षयति । [3]तद्भावादेव मठे मार्जनक्रियापि न भवति । तन्मूषकत्रासार्थमेतेन वंशेन भिक्षापात्रं मुहुर्मुहुस्ता-डयामि, नान्यत्कारणमिति । अपरमेतत्कुतूहलं पश्यास्य दुरात्मनो यन्मार्जारमर्कटादयोऽपि तिरस्कृता अस्योत्पतनेन ।' बृहत्स्फिगाह—'अथ ज्ञायते तस्य बिलं कस्मिंश्चित्प्रदेशे । ताम्रचूड आह—'भगवन्, न वेद्मि सम्यक्' । स आह—नूनं [4]निधानस्योपरि तस्य बिलम् । निधानोष्मणा प्रकूर्दते ।

१ नरकस्य सङ्ग्रहः । २ अन्योन्यविचारपरम्परायां यत् शैथिल्यं मनसो वैराग्यं तस्य कारणं हेतुः । ३ तस्य मूषिकस्य भावाद् विद्यमानत्वादेवेत्यर्थः । ४ भूगर्भस्थितस्य धनस्य ।

उक्तञ्च—

ऊष्मापि वित्तजो वृद्धिं तेजो नयति देहिनाम् ।
किं पुनस्तस्य संभोगस्त्यागकर्मसमन्वितः ॥ ७१ ॥

तथा च—

नाकस्माच्छाण्डिली मातर्विक्रीणाति तिलैस्तिलान् ।
लुञ्चितानितरैर्येन हेतुरत्र भविष्यति' ॥ ७२ ॥

ताम्रचूड़ आह—कथमेतत् ।' स आह—

## कथा (२)

यदाहं कस्मिंश्चित्स्थाने प्रावृट्काले व्रतग्रहणनिमित्तं कञ्चिद् ब्राह्मणं वासार्थं प्रार्थितवान् । ततश्च तद्वचनात्तेनापि शुश्रूषितः सुखेन देवार्चनपरस्तिष्ठामि । अथान्यस्मिन्नहनि प्रत्यूषे प्रबुद्धोऽहं [1]ब्राह्मणब्राह्मणीसंवादे दत्तावधानः शृणोमि । तत्र ब्राह्मण आह—'ब्राह्मणि, प्रभाते दक्षिणायनसंक्रान्तिरनन्त-दानफलदा भविष्यति । तदहं प्रतिग्रहार्थं ग्रामान्तरं यास्यामि । त्वया ब्राह्मणस्यैकस्य भगवतः [2]सूर्यस्योद्देशेन किंचिद्भोजनं दातव्यम् ।' इति । अथ तच्छ्रुत्वा ब्राह्मणी परुषतरवचनैस्तं भर्त्सयमाना प्राह—'कुतस्ते [3]दारिद्र्योपहतस्य भोजनप्राप्तिः । तत्किं न लज्जसे एवं ब्रुवाणः । अपि च न मया तव हस्तलग्नया क्वचिदपि लब्धं सुखम् । न मिष्टान्नस्यास्वादनम्, न च हस्तपादकण्ठादिभूषणम्' तच्छ्रुत्वा भयत्रस्तोऽपि विप्रो मन्दं मन्दं प्राह—'ब्राह्मणि, नैतद्युज्यते वक्तुम् । उक्तञ्च—

१ ब्राह्मणस्य ब्राह्मण्या सह परस्परकथनोपकथने दत्तमनाः । २ सूर्य-नारायणप्रीतये । ३ निर्धनस्य ।

ग्रासादपि तदर्धं च कस्मान्नो दीयतेऽर्थिषु ।
इच्छानुरूपो विभवः कदा कस्य भविष्यति ॥ ७३ ॥

ईश्वरा भूरिदानेन यल्लभन्ते फलं किल ।
दरिद्रस्तच्च काकिण्या प्राप्नुयादिति नः श्रुतिः ॥ ७४ ॥

दाता लघुरपि सेव्यो भवति न कृपणो महानपि समृद्धया ।
कूपोऽन्तः स्वादुजलः प्रीत्यै लोकस्य न समुद्रः ॥ ७५ ॥

तथा च—

अकृतत्यागमहिम्ना मिथ्या किं राजराजशब्देन ।
गोप्तारं न निधीनां कथयन्ति महेश्वरं विबुधाः ॥ ७६ ॥

अपि च—

सदा दानपरिक्षीणः शस्त एव करीश्वरः ।
अदानः पीनगात्रोऽपि निन्द्य एव हि गर्दभः ॥ ७७ ॥

सुशीलोऽपि सुवृत्तोऽपि यात्यदानादधो घटः ।
पुनः कुब्जापि काणापि दानादुपरि कर्कटी ॥ ७८ ॥

यच्छञ्जलमपि जलदो वल्लभतामेति सकललोकस्य ।
नित्यं प्रसारितकरो मित्रोऽपि न वीक्षितुं शक्यः ॥ ७९ ॥

एवं ज्ञात्वा दारिद्र्याभिभूतैरपि स्वल्पात्स्वल्पतरं काले पात्रे च देयम् । उक्तञ्च—

सत्पात्रे महती श्रद्धा देशे काले यथोचिते ।
यद्दीयते विवेकज्ञैस्तदानन्त्याय कल्पते ॥ ८० ॥

तथा च—

अतितृष्णा न कर्त्तव्या तृष्णां नैव परित्यजेत् ।
अतितृष्णाभिभूतस्य शिखा भवति मस्तके ॥ ८१ ॥

ब्राह्मण्याह—'कथमेतत् ।' स आह—

# कथा (३)

अस्ति कस्मिंश्चिद्वनोद्देशे [1]कश्चित्पुलिन्दः। स च [2]पापर्द्धिं कर्तुं वनं प्रति प्रस्थितः। अथ तेन [3]प्रसर्पता [4]महानञ्जनपर्वत-शिखराकारः [5]क्रोडः समासादितः। तं दृष्ट्वा [6]कर्णान्ताकृष्ट-निशितसायकेन [7]समाहतः। तेनापि कोपाविष्टेन चेतसा बालेन्दुद्युतिना दंष्ट्राग्रेण [8]पाटितोदरः पुलिन्दो [9]गतासुर्भूतले न्यपतत्। अथ लुब्धकं व्यापाद्य शूकरोऽपि [10]शरप्रहारवेदनया [11]पञ्चत्वं गतः। एतस्मिन्नन्तरे कश्चिदासन्नमृत्युः शृगाल इतस्ततो निराहारतया पीडितः परिभ्रमंस्तं प्रदेशमाजगाम। यावद्वराहपुलिन्दौ द्वावपि पश्यति तावत्प्रहृष्टो व्यचिन्तयत्— 'भोः, सानुकूलो मे विधिः। तेनैवैतदचिन्तितं भोजनमुपस्थि-तम्। अथवा साध्विदमुच्यते—

अकृतेऽप्युद्यमे पुंसामन्यजन्मकृतं फलम्।
शुभाशुभं समभ्येति विधिना संनियोजितम्॥ ८२॥

तथा च—

यस्मिन्देशे च काले च वयसा यादृशेन च।
कृतं शुभाशुभं कर्म तत्तथा तेन भुज्यते॥ ८३॥

तदहं तथा भक्षयामि यथा बहून्यहानि मे प्राणयात्रा भवति तत्तावदेनं [12]स्नायुपाशं धनुष्कोटिगतं भक्षयामि।

---

१ म्लेच्छजातिभवः। २ पापस्य वृद्धिं। ३ प्रसता। ४ कज्जलपर्वत शिखरसदृशमूर्तिः। ५ शूकरः। ६ कर्णान्तं कर्णपर्यन्तं आकृष्टः निशितः तीक्ष्णः सायकः बाणः येन तथाभूतः। ७ ताडितः। ८ विदारितकुक्षिः। ९ निर्गतप्राणः सन्। १० बाणाघातपीडया। ११ मृतः। १२ उदर-स्थनाडीविशेषं, अन्त्ररूपरज्जुम्।

उक्तं च—

शनैः शनैश्च भोक्तव्यं स्वयं वित्तमुपार्जितम् ।
रसायनमिव प्राज्ञैर्हेलया न कदाचन ॥ ८४ ॥

इत्येवं मनसा निश्चित्य [1]चापचटितकोटिं मुखमध्ये प्रक्षिप्य स्नायुं भक्षितुं प्रवृत्तः, ततश्च त्रुटिते पाशे तालुदेशं विदार्य चापकोटिर्मस्तकमध्येन निष्क्रान्ता । सोऽपि तद्वेदनया तत्क्षणान्मृतः । अतोऽहं ब्रवीमि—'अतितृष्णा न कर्तव्या' इति ॥ स पुनरप्याह—'ब्राह्मणि, न श्रुतं भवत्या ?

आयुः कर्म च वित्तं च विद्यानिधनमेव च ।
पञ्चैतानि हि सृज्यन्ते गर्भस्थस्यैव देहिनः' ॥ ८५ ॥

अथैवं सा तेन प्रबोधिता ब्राह्मण्याह—'यद्येवं तदस्ति मे गृहे स्तोकस्तिलराशिः । ततस्तिलांल्लुञ्चित्वा[2] तिलचूर्णेन ब्राह्मणं भोजयिष्यामि' इति । ततस्तद्वचनं श्रुत्वा ब्राह्मणो ग्रामं गतः । सापि तिलानुष्णोदकेन संमर्द्य कुट्टित्वा सूर्यातपे दत्तवती । अत्रान्तरे तस्या गृहकर्मव्यग्रायास्तिलानां मध्ये कश्चित्सारमेयो[3] मूत्रोत्सर्गं चकार । तं दृष्ट्वा सा चिन्तितवती—'अहो, नैपुण्यं पश्य पराङ्मुखीभूतस्य विधेः, यदेते तिला अभोज्याः कृताः । तदहमेतान्समादाय कस्यचिद् गृहं गत्वा लुञ्चितैरलुञ्चितानानयामि । सर्वोऽपि जनोऽनेन विधिना प्रदास्यति' इति । अथ यस्मिन् गृहेऽहं भिक्षार्थं प्रविष्टस्तत्र गृहे सापि तिलानादाय प्रविष्टा विक्रयं कर्तुम् । आह च—'गृह्णातु कश्चिदलुञ्चितैर्लुञ्चिताँस्तिलान् ।' अथ तद्गृहगृहिणी गृहं प्रविष्टा यावदलुञ्चितैर्लुञ्चितान्गृह्णाति, तावदस्याः पुत्रेण कामन्दकीयशास्त्रं दृष्ट्वा

१ चापस्य धनुषः चटिता खण्डिता या कोटिः अग्रभागः ताम् ।
२ लुञ्चित्वा कण्डयित्वा त्वचोऽपनीयेत्यर्थः । ३ कुक्कुरः ।

व्याहृतम्—'मातः, अग्राह्याः खल्विमे तिलाः। नास्या अलुञ्चितैर्लुञ्चिता ग्राह्याः। कारणं किञ्चिद्भविष्यति। तेनैषाऽलुञ्चितैर्लुञ्चितान्प्रयच्छति।' तच्छ्रुत्वा तया परित्यक्तास्ते तिलाः। अतोऽहं ब्रवीमि—'नाकस्माच्छाण्डिली मातः' इति॥ एतदुक्त्वा स भूयोऽपि प्राह—'अथ ज्ञायते तस्य क्रमणमार्गः। ताम्रचूड आह—'भगवन्, ज्ञायते, यत एकाकी न समागच्छति, किंत्वसंख्ययूथपरिवृतः पश्यतो मे परिभ्रमन्नितस्ततः सर्वजनेन सहागच्छति याति च।' अभ्यागत आह—'अस्ति किंचित्खनित्रकम्[१]।' स आह—'बाढमस्ति। एषा सर्वलोहमयी स्वहस्तिका।' अभ्यागत आह—'तर्हि प्रत्यूषे त्वया मया सह स्थातव्यम्, येन द्वावपि [२]जनचरणामलिनायां भूमौ तत्पदानुसारेण गच्छावः। मयापि तद्वचनमाकर्ण्य चिन्तितम्—'अहो, विनष्टोऽस्मि, यतोऽस्य साभिप्रायवचांसि श्रूयन्ते। नूनं यथा निधानं ज्ञातं तथा दुर्गमप्यस्माकं ज्ञास्यति। एतदभिप्रायादेव ज्ञायते। उक्तं च—

सकृदपि दृष्ट्वा पुरुषं विबुधा जानन्ति सारतां तस्य।
हस्ततुलयापि निपुणाः पलप्रमाणं विजानन्ति॥ ८६॥

वाञ्छैव सूचयति पूर्वतरं भविष्यं
पुंसां यदन्यतनुजं त्वशुभं शुभं वा।
विज्ञायते शिशुरजातकलापचिह्नः
प्रत्युद्गतैरपसरन्सरसः कलापी॥ ८७॥

ततोऽहं भयत्रस्तमनाः सपरिवारो दुर्गमार्गं परित्यज्यान्यमार्गेण गन्तुं प्रवृत्तः सपरिजनो यावदग्रतो गच्छामि तावत्सम्मुखो बृहत्कायो मार्जारः समायाति। स च मूषकवृन्द-

१ कुदाली इति भाषायाम्।
२ जनचरणैः लोकानां पादन्यासैः अमलिनायामक्षुण्णायाम्।

मवलोक्य तन्मध्ये सहसोत्पपात । अथ ते मूषका मां कुमार्गगामिनमवलोक्य [1]गर्हयन्तो हतशेषा [2]रुधिरप्लावितवसुन्धरास्तमेव दुर्गं प्रविष्टाः । अथवा साध्विदमुच्यते—

छित्त्वा पाशमपास्य कूटरचनां भङ्क्त्वा बलाद्वागुरां
पर्यन्ताग्निशिखाकलापजटिलान्निर्गत्य दूरं वनात् ।
व्याधानां शरगोचरादपि जवेनोत्पत्य धावन्मृगः
कूपान्तः पतितः करोतु विधुरे किंवा विधौ पौरुषम् ८८

अथाहमेकोऽन्यत्र गतः, शेषा मूढतया तत्रैव दुर्गं प्रविष्टाः । अत्रान्तरे स दुष्टपरिव्राजको रुधिरबिन्दुचर्चितां भूमिमवलोक्य तेनैव दुर्गमार्गेणागत्योपस्थितः । ततश्च स्वहस्तिकया खनितुमारब्धः । अथ तेन खनता प्राप्तं तन्निधानं यस्योपरि सदैवाहं कृतवसतिर्यस्योष्मणा[3] महादुर्गमपि गच्छामि । ततो हृष्टमनास्ताम्रचूडमिदमूचेऽभ्यागतः—'भो भगवन्, इदानीं स्वपिहि निःशङ्कः । अस्योष्मणा मूषकस्ते जागरणं संपादयति ।' एवमुक्त्वा निधानमादाय मठाभिमुखं प्रस्थितौ द्वावपि । अहमपि यावन्निधानरहितं स्थानमागच्छामि, तावदरमणीयमुद्वेगकारकं तत्स्थानं वीक्षितुमपि न शक्नोमि । अचिन्तयं च—'किं करोमि । क्व गच्छामि । कथं मे स्यान्मनसः प्रशान्तिः ।' एवं चिन्तयतो महाकष्टेन स दिवसो व्यतिक्रान्तः । अथास्तमितेऽर्के सोद्वेगो निरुत्साहस्तस्मिन्मठे सपरिवारः प्रविष्टः । अथास्मत्परिग्रहशब्दमाकर्ण्य ताम्रचूडोऽपि भूयो भिक्षापात्रं जर्जरवंशेन ताडयितुं प्रवृत्तः । अथासावभ्यागतः प्राह—'सखे, किमद्यापि निःशङ्को न निद्रां गच्छसि ।' स आह—'भगवन्, भूयोऽपि समायातः सपरिवारः स दुष्टात्मा मूषकः । तद्भया-

१ निन्दन्तः । २ रुधिरेण प्लाविता वसुन्धरा यैस्ते । ३ ऊष्मणा उत्तापेन प्रभावेणेतिभावः ।

जर्जरवंशेन भिक्षापात्रं ताडयामि ।' ततो विहस्याभ्यागतः प्राह—'सखे, मा भैषीः वित्तेन सह गतोऽस्य [1]कूर्दनोत्साहः । सर्वेषामपि जन्तूनामियमेव स्थितिः । उक्तं च—

यदुत्साही सदा मर्त्यः पराभवति यज्जनान् ।
यदुद्धतं वदेद्वाक्यं तत्सर्वं वित्तजं बलम् ॥ ८९ ॥

अथाहं तच्छ्रुत्वा कोपाविष्टो भिक्षापात्रमुद्दिश्य विशेषादुत्कूर्दितोऽप्राप्त एव भूमौ निपतितः । तच्छ्रुत्वासौ मे शत्रुर्विहस्य ताम्रचूडमुवाच—'भोः, पश्य पश्य कौतूहलम् ।' आह च—

अर्थेन बलवान्सर्वोऽप्यर्थयुक्तः स पण्डितः ।
पश्यैनं मूषकं व्यर्थं स्वजातेः समतां गतम् ॥ ९० ॥

तत् स्वपिहि त्वं गतशङ्कः । यदस्योत्पतनकारणं तद्रावयोर्हस्तगतं जातम् । अथवा साध्विदमुच्यते—

दंष्ट्राविरहितः सर्पो मदहीनो यथा गजः ।
तथार्थेन विहीनोऽत्र पुरुषो नामधारकः ॥ ९१ ॥

तच्छ्रुत्वाहं मनसा विचिन्तितवान्—'यतोऽङ्गुलिमात्रमपि कूर्दनाशक्तिर्नास्ति, तद्धिगर्थहीनस्य पुरुषस्य जीवितम् । उक्तं च—

अर्थेन च विहीनस्य पुरुषस्याल्पमेधसः ।
उच्छिद्यन्ते क्रियाः सर्वा ग्रीष्मे कुसरितो यथा ॥ ९२ ॥
यथा काकयवाः प्रोक्ता यथारण्यभवास्तिलाः ।
नाममात्रा न सिद्धौ हि धनहीनास्तथा नराः ॥ ९३ ॥
सन्तोऽपि न हि राजन्ते दरिद्रस्येतरे गुणाः ।
आदित्य इव भूतानां श्रीर्गुणानां प्रकाशिनी ॥ ९४ ॥

---

१ उल्लङ्घनोद्योगः ।

न तथा बाध्यते लोके प्रकृत्या निर्धनो जनः ।
यथा द्रव्याणि संप्राप्य तैर्विहीनः सुखे स्थितः ॥ ९५ ॥

शुष्कस्य कीटखातस्य वह्निदग्धस्य सर्वतः ।
तरोरप्यूषरस्थस्य वरं जन्म न चार्थिनः ॥ ९६ ॥

शङ्कनीया हि सर्वत्र निष्प्रतापा दरिद्रता ॥
उपकर्तुमपि प्राप्तं निःस्वं संत्यज्य गच्छति ॥ ९७ ॥

उन्नम्योन्नम्य तत्रैव निर्धनानां मनोरथाः ।
हृदयेष्वेव लीयन्ते विधवास्त्रीस्तनाविव ॥ ९८ ॥

व्यक्तेऽपि वासरे नित्यं दौर्गत्यतमसावृतः ।
अग्रतोऽपि स्थितो यत्नान्न केनापीह दृश्यते' ॥ ९९ ॥

एवं विलप्याहं भग्नोत्साहस्तन्निधानं [1]गण्डोपधानीकृतं दृष्ट्वा स्वं दुर्गं प्रभाते गतः । ततश्च मद्भृत्याः प्रभाते गच्छन्तो मिथो जल्पन्ति—'अहो, असमर्थोऽयमुदरपूरणेऽस्माकम् । केवलमस्य [2]पृष्ठलग्नानां बिडालादिविपत्तयः । तत्किमनेनाराधितेन । उक्तं च—

यत्सकाशान्न लाभः स्यात्केवलाः स्युर्विपत्तयः ।
स स्वामी दूरतस्त्याज्यो विशेषादनुजीविभिः ॥ १०० ॥

एवं तेषां वचांसि श्रुत्वा स्वदुर्गं प्रविष्टोऽहम् । यावन्नो कश्चिन्मम संमुखेऽभ्येति तावन्मया चिन्तितम् 'धिगियं दरिद्रता । अथवा साध्विदमुच्यते—

मृतो दरिद्रः पुरुषो मृतं मैथुनमप्रजम् ।
मृतमश्रोत्रियं श्राद्धं मृतो यज्ञस्त्वदक्षिणः' ॥ १०१ ॥

१ गण्डस्य कपोलस्य उपधानीकृतं आधारीकृतम् । गण्डाधःस्थले स्थापयित्वा शयितमित्यर्थः । २ पृष्ठानुयायिनाम् ।

एवं मे चिन्तयतस्ते भृत्या मम शत्रूणां सेवका जाताः । ते च मामेकाकिनं दृष्ट्वा [1]विडम्बनां कुर्वन्ति । अथ मयैकाकिना [2]योगनिद्रां गतेन भूयो विचिन्तितम्—'यत्तस्य कुतपस्विनः समाश्रयं गत्वा [3]तद्गण्डोपधानवर्तिकृतां [4]वित्तपेटां शनैः शनैर्विदार्य तस्य निद्रावशंगतस्य स्वदुर्गे तद्वित्तमानयामि, येन भूयोऽपि मे वित्तप्रभावेणाधिपत्यं पूर्ववद्भविष्यति । उक्तं च—

व्यथयन्ति परं चेतो मनोरथशतैर्जनाः ।
नानुष्ठानैर्धनैर्हीनाः कुलजा विधवा इव ॥ १०२ ॥
दौर्गत्यं देहिनां दुःखमपमानकरं परम् ।
येन स्वैरपि मन्यन्ते जीवन्तोऽपि मृता इव ॥ १०३ ॥
दैन्यस्य पात्रतामेति पराभूतेः परं पदम् ।
विपदामाश्रयः शश्वद्दौर्गत्यकलुषीकृतः ॥ १०४ ॥
लज्जन्ते बान्धवास्तेन संबन्धं गोपयन्ति च ।
मित्राण्यमित्रतां यान्ति यस्य न स्युः कपर्दकाः ॥ १०५ ॥
मूर्तं लाघवमेवैतदपायानामिदं गृहम् ।
पर्यायो मरणस्यायं निर्धनत्वं शरीरिणाम् ॥ १०६ ॥
अजाधूलिरिव त्रस्तैर्मार्जनीरेणुवज्जनैः ।
दीपखद्योतच्छायेव त्यज्यते निर्धनो जनः ॥ १०७ ॥
शौचावशिष्टयाप्यस्ति किंचित्कार्यं क्वचिन्मृदा ।
निर्धनेन जनेनैव न तु किंचित्प्रयोजनम् ।
अधनो दातुकामोऽपि संप्राप्तो धनिनां गृहम् ।
मन्यते याचकोऽयं धिग्दारिद्र्यं खलु देहिनाम् ॥ १०९ ॥

१ विडम्बनां कुर्वन्ति उपहसन्ति, तिरस्कुर्वन्तीत्यर्थः । २ कञ्चन उपायं स्थिरयितुं नेत्रनिमीलनरूपव्यापारं कृतवतेत्यर्थः । ३ तस्य तपस्विनः गण्डस्य उपधानं ( गाल के नीचे को तकिया ) तद्वर्तिकृतां तत्स्थानीकृताम् । ४ धनपेटिकाम् ।

अतो वित्तापहारं विदधतो यदि मे मृत्युः स्यात्तथापि शोभनम् । उक्तं च—

स्ववित्तहरणं दृष्ट्वा यो हि रक्षत्यसून्नरः ।
पितरोऽपि न गृह्णन्ति तद्दत्तं सलिलाञ्जलिम् ॥ ११० ॥

तथा च—

गवार्थे ब्राह्मणार्थे च स्त्रीवित्तहरणे तथा ।
प्राणांस्त्यजति यो युद्धे तस्य लोकाः सनातनाः ॥ १११ ॥

एवं निश्चित्य रात्रौ तत्र गत्वा निद्रावशमुपागतस्य पेटायां मया छिद्रं कृतं यावत्, तावत्प्रबुद्धो दुष्टतापसः । ततश्च जर्जरवंशप्रहारेण शिरसि ताडितः कथंचिदायुःशेषतया[1] निर्गतोऽहम्, न मृतश्च । उक्तं च—

प्राप्तव्यमर्थं लभते मनुष्यो
देवोऽपि तं लङ्घयितुं न शक्तः ।
तस्मान्न शोचामि न विस्मयो मे
यदस्मदीयं न हि तत्परेषाम्' ॥ ११२ ॥

काककूर्मौ पृच्छतः—'कथमेतत् ।' हिरण्यक आह—

## कथा (४)

'अस्ति कस्मिंश्चिन्नगरे सागरदत्तो नाम वणिक् । तत्सूनुना रूपकशतेन विक्रीयमाणः पुस्तको गृहीतः । तस्मिंश्च लिखितमस्ति—

प्राप्तव्यमर्थं लभते मनुष्यो
देवोऽपि तं लङ्घयितुं न शक्तः ।

१ जीवनकालस्य अवशिष्टतया ।

तस्मान्न शोचामि न विस्मयो मे
यदस्मदीयं न हि तत्परेषाम् ॥ ११३ ॥

तद् दृष्ट्वा सागरदत्तेन तनुजः पृष्टः—'पुत्र, कियता मूल्येनैष पुस्तको गृहीतः ।' सोऽब्रवीत्—'रूपकशतेन ।' तच्छ्रुत्वा सागरदत्तोऽब्रवीत्—'धिङ् मूर्ख, त्वं लिखितैकश्लोकं रूपकशतेन यद् गृह्णासि, एतया बुद्धया कथं द्रव्योपार्जनं करिष्यसि। तदद्यप्रभृति त्वया मे गृहे न प्रवेष्टव्यम् ।' एवं [1]निर्भर्त्स्य गृहान्निःसारितः । स च तेन [2]निर्वेदेन [3]विप्रकृष्टं देशान्तरं गत्वा किमपि नगरमासाद्यावस्थितः । अथ कतिपयदिवसैस्तन्नगरनिवासिना केनचिदसौ पृष्टः—'कुतो भवानागतः । किंनामधेयो वा' इति । असावब्रवीत्—प्राप्तव्यमर्थं लभते मनुष्यः ।' अथान्येनापि पृष्टेनानेन तथैवोत्तरं दत्तम् । एवं च तस्य नगरस्य मध्ये प्राप्तव्यमर्थ इति तस्य प्रसिद्धं नामजातम् । अथ राजकन्या चन्द्रवती नामाभिनवरूपयौवनसंपन्ना सखीद्वितीयैकस्मिन्महोत्सवदिवसे नगरं निरीक्षमाणास्ति। तत्रैव च कश्चिद्राजपुत्रोऽतीव रूपसंपन्नो मनोरमश्च कथमपि तस्या दृष्टिगोचरं गतः । तद्दर्शनसमकालमेव [4]कुसुमबाणाहतया तया निजसख्यभिहिता—'सखि' यथा किलानेन सह समागमो भवति तथाद्य त्वया यतितव्यम् । एवं श्रुत्वा सा सखी तत्सकाशं गत्वा शीघ्रमब्रवीत्—यदहं चन्द्रवत्या तवान्तिकं प्रेषिता । भणितं च त्वां प्रति तया' "यन्मम त्वद्दर्शनान्मनोभवेन [5]पश्चिमावस्था कृता । तद्यदि शीघ्रमेव मदन्तिके न समेष्यसि तदा मे मरणं [6]शरणम् ।" इति श्रुत्वा तेनाभिहितम्—'यदवश्यं मया तत्रागन्तव्यं तत्कथय केनोपायेन

१ निर्भर्त्स्य तिरस्कृत्य । २ स्वावमाननाजनितदुःखेन । ३ विप्रकृष्टं दूरं । ४ कामदेवस्य शरेण ताडितया । ५ पश्चिमावस्था अन्तिमा दशा मरणदशेत्यर्थः । ६ शरणं रक्षकम् ।

प्रवेष्टव्यम् ।' अथ सख्याभिहितम्—'रात्रौ [1]सौधावलम्बितया [2]दृढवरत्रया त्वया [3]तत्रारोढव्यम् ।' सोऽब्रवीत्—यद्येवं निश्चयो भवत्यास्तदहमेवं करिष्यामि ।' इति निश्चित्य सखी चन्द्रवतीसकाशं गता । अथागतायां रजन्यां स राजपुत्रः स्वचेतसा व्यचिन्तयत्—'अहो ' महदकृत्यमेतत् । उक्तं च—

गुरोः सुतां मित्रभार्यां स्वामिसेवकगेहिनीम् ।
यो गच्छति पुमांल्लोके तमाहुर्ब्रह्मघातिनम् ॥ ११४ ॥

अपरं च—

अयशः प्राप्यते येन येन चापगतिर्भवेत् ।
स्वर्गाच्च भ्रश्यते येन तत्कर्म न समाचरेत्' ॥ ११५ ॥

इति सम्यग्विचार्य तत्सकाशं न जगाम । अथ प्राप्तव्यमर्थः पर्यटन्धवलगृहपार्श्वे रात्राववलम्बितवरत्रां दृष्ट्वा कौतुकाविष्टहृदयस्तामालम्ब्याधिरूढः । तया च राजपुत्र्या स एवायमित्याश्वस्तचित्तया [4]स्नानखादनपानाच्छादनादिना संमान्य तेन सह शयनतलमाश्रितया [5]तदङ्गसंस्पर्शसंजातहर्षरोमाञ्चितगात्रयोक्तम्—'युष्मद्दर्शनमात्रानुरक्तया मयात्मा प्रदत्तोऽयम् । त्वद्वर्जमन्यो भर्ता मनस्यपि मे न भविष्यति' इति । तत्कस्मान्मया सह न ब्रवीषि ।' सोऽब्रवीत्—'प्राप्तव्यमर्थं लभते मनुष्यः ।' इत्युक्ते तयान्योऽयमिति मत्वा धवलगृहादुत्तार्य मुक्तः । स तु [6]खण्डदेवकुले गत्वा सुप्तः । अथ तत्र कयाचित्स्वैरिण्या[7] दत्तसंकेतको

१ सौधात् राजसदनात् अवलम्बितया लम्बमानया । २ दृढया कठिनया वरत्रया रज्जुविशेषेण । ३ चन्द्रवती-मन्दिरे । ४ स्नानभोजनानीयवस्त्रादिनेत्यर्थः । ५ तस्य वणिक्पुत्रस्य अङ्गसंस्पर्शेन सञ्जातः समुत्पन्नः यो हर्ष आनन्दः तेन रोमाञ्चितं पुलकितं गात्रं यस्याः सा तया । ६ खण्डदेवकुले-भग्नमन्दिरे । ७ व्यभिचारिण्या ।

[1]यावद्दण्डपाशकः प्राप्तः, तावदसौ[2] पूर्वसुप्तस्तेन दृष्टो रहस्यसंरक्षणार्थमभिहितश्च—'को भवान्' । सोऽब्रवीत्—'प्राप्तव्यमर्थं लभते मनुष्यः ।' इति श्रुत्वा दण्डपाशकेनाभिहितम्—'यच्छून्यं देवगृहमिदम् । तदत्र मदीयस्थाने गत्वा स्वपिहि ।' तथा प्रतिपद्य स [3]मतिविपर्यासादन्यशयने सुप्तः । अथ तस्य रक्षकस्य कन्या विनयवती नाम रूपयौवनसंपन्ना कस्यापि पुरुषस्यानुरक्ता संकेतं दत्त्वा तत्र शयने सुप्तासीत् । अथ सा तमायातं दृष्ट्वा स एवायमस्मद्वल्लभ इति रात्रौ घनतरान्धकारव्यामोहितोत्थाय भोजनाच्छादनादिक्रियां कारयित्वा गान्धर्वविवाहेनात्मानं विवाहयित्वा तेन समं शयने स्थिता विकसितवदनकमला तमाह—'किमद्यापि मया सह विश्रब्धं भवान्न ब्रवीति ।' सोऽब्रवीत्—'प्राप्तव्यमर्थं लभते मनुष्यः ।' इति श्रुत्वा तया चिन्तितम्—'यत्कार्यमसमीक्षितं क्रियते तस्येदृक्फलविपाको भवति' इति । एवं विमृश्य सविषादया तया निःसारितोऽसौ । स च याव[4]द्वीथीमार्गेण गच्छति ताव[5]दन्यविषयवासी वरकीर्तिर्नाम वरो महता वाद्यशब्देनागच्छति । प्राप्तव्यमर्थोऽपि तैः समं गन्तुमारब्धः । अथ यावत्प्रत्यासन्ने लग्नसमये राजमार्गासन्नश्रेष्ठिगृहद्वारे रचितमण्डपवेदिकायां कृतकौतुकमङ्गलवेशा वणिक्सुतास्ति ' तावन्मदमत्तो [6]हस्त्यारोहकं हत्वा [7]प्रणश्यज्जनकोलाहलेन लोकमाकुलयँस्तमेवोद्देशं प्राप्तः । तं च दृष्ट्वा सर्वे वरानुयायिनो वरेण सह [8]प्रणश्य दिशो जग्मुः । अथास्मिन्नवसरे[9]भयतरललोचना-

१ दण्डपाशकः दण्डपाशनामकः कश्चन पुरुषः । २ वणिक्पुत्रः । ३ बुद्धिवैपरीत्यात् । ४ वीथीमार्गेण-राजमार्गेणेत्यर्थः । ५ अन्यदेशवासीत्यर्थः । ६ हस्तिपालकम् । ७ प्रणश्यतां प्रपलायमानानां जनानां कोलाहलेन । ८ पलाय्य । ९ भयेन तरले अधीरे लोचने नयने यस्याः सा ताम् ।

मेकाकिनीं कन्यामवलोक्य 'मा भैषीः । अहं परित्राता' इति सुधीरं स्थिरीकृत्य दक्षिणपाणौ संगृह्य महासाहसिकतया प्राप्तव्यमर्थः परुषवाक्यैर्हस्तिनं निर्भर्त्सितवान् । ततः कथमपि दैवयोगादपयाते हस्तिनि ससुहृद्बान्धवेनातिक्रान्तलग्नसमये वरकीतिनागत्य तावत्तां कन्यामन्यहस्तगतां दृष्ट्वाभिहितम् । 'भोः श्वशुर, विरुद्धमिदं त्वयानुष्ठितं यन्मह्यं प्रदाय कन्यान्यस्मै प्रदत्ता' इति । सोऽब्रवीत्—'भोः, अहमपि हस्तिभयपलायितो भवद्भिः सहायातो न जाने किमिदं वृत्तम् ।' इत्यभिधाय दुहितरं प्रष्टुमारब्धः—'वत्से, न त्वया सुन्दरं कृतम् । तत्कथ्यतां कोऽयं वृत्तान्तः ।' साब्रवीत्—'यदहमनेन प्राणसंशयाद्रक्षिता, तदेनं मुक्त्वा मम जीवन्त्या नान्यः पाणिं ग्रहीष्यति' इति । अनेन [1]वार्ताव्यतिकरेण रजनी [2]व्युष्टा । अथ प्रातस्तत्र संजाते [3]महाजनसमवाये वार्ताव्यतिकरं श्रुत्वा राजदुहिता तमुद्देशमागता । कर्णपरम्परया श्रुत्वा दण्डपाशकसुतापि तत्रैवागता । अथ तं महाजनसमवायं श्रुत्वा राजापि तत्रैवाजगाम । प्राप्तव्यमर्थं प्राह च—'भोः, विश्रब्धं कथय, कीदृशोऽसौ वृत्तान्तः । अथ सोऽब्रवीत्—प्राप्तव्यमर्थं लभते मनुष्यः' इति । राजकन्या स्मृत्वा प्राह—'देवोऽपि तं लङ्घयितुं न शक्तः' इति । ततो दण्डपाशकसुताब्रवीत्—'तस्मान्न शोचामि न विस्मयो मे, इति । तमखिललोकवृत्तान्तमाकर्ण्य वणिक्सुताब्रवीत्—'यदस्मदीयं न हि तत्परेषाम्' इति अभयदानं दत्त्वा राजा पृथक्पृथग्वृत्तान्ताञ्ज्ञात्वावगत[4]तत्त्वस्तस्मै प्राप्तव्यमर्थाय स्वदुहितरं सबहुमानं ग्रामसहस्रेण

१ वार्ताव्यतिकरेण अन्योन्यवादविवादसम्बन्धेन । २ व्युष्टा-अतिक्रान्ता । ३ महाजनसमवाये अनेकजनसम्मेलने । ४ यथार्थतया विदितसकलवृत्तान्तः ।

समं सर्वालङ्कारपरिवारयुतां दत्त्वा त्वं मे पुत्रोऽसीति नगर-विदितं तं यौवराज्येऽभिषिक्तवान् । दण्डपाशकेनापि स्वदुहिता स्वशक्त्या वस्त्रदानादिना संभाव्य प्राप्तव्यमर्थाय प्रदत्ता । अथ प्राप्तव्यमर्थेनापि स्वीयपितृमातरौ समस्तकुटुम्बावृतौ तस्मिन्नगरे सम्मानपुरःसरं समानीतौ । अथ सोऽपि स्वगोत्रेण सह विविधभोगानुपभुञ्जानः सुखेनावस्थितः । अतोऽहं ब्रवीमि —'प्राप्तव्यमर्थं लभते मनुष्यः' इति ॥ तदेतत्सकलं सुखदुःख-मनुभूय परं विषादमुपागतोऽनेन मित्रेण त्वत्सकाशमानीतः । तदेतन्मे वैराग्यकारणम् ।' मन्थरक आह—'भद्र, भवति [1]सुहृदयमसन्दिग्धं, यत् क्षुत्क्षामोऽपि शत्रुभूतं त्वां भक्ष्यस्थाने स्थितमेवं पृष्ठमारोप्यानयति न मार्गेऽपि भक्षयति । उक्तं च यतः—

विकारं याति नो चित्तं वित्ते यस्य कदाचन ।
मित्रं स्यात्सर्वकाले च कारयेन्मित्रमुत्तमम् ॥ ११६ ॥
विद्वद्भिः सुहृदामत्र चिन्हैरेतैरसंशयम् ।
परीक्षाकरणं प्रोक्तं होमाग्नेरिव पण्डितैः ॥ ११७ ॥

तथा च—

आपत्काले तु संप्राप्ते यन्मित्रं मित्रमेव तत् ।
वृद्धिकाले तु संप्राप्ते दुर्जनोऽपि सुहृद्भवेत् ॥ ११८ ॥

तन्ममाप्यद्यास्य विषये विश्वासः समुत्पन्नो यतो नीति-विरुद्धेयं मैत्री मांसाशिभिर्वायसैः सह जलचराणाम् । अथवा साध्विदमुच्यते—

मित्रं कोऽपि न कस्यापि नितान्तं न च वैरकृत् ।
दृश्यते मित्रविध्वस्तात्कार्याद्वैरीपरीक्षितः ॥ ११९ ॥

---

१ अयं वायसः असन्दिग्धं सुहृद् अत्र सन्देहो नास्तीत्यर्थः ।

तत्स्वागतं भवतः । स्वगृहवदास्थतामत्र सरस्तीरे । यच्च वित्तनाशो विदेशवासश्च ते संजातस्तत्र विषये संतापो न कर्तव्यः । उक्तं च—

अभ्रच्छाया खलप्रीतिः सिद्धमन्नं च योषितः ।
किंचित्कालोपभोग्यानि यौवनानि धनानि च ॥ १२० ॥

अतएव विवेकिनो जितात्मानो धनस्पृहां न कुर्वन्ति ।
उक्तं च—

सुसञ्चितैर्जीवनवत्सुरक्षितै-
र्निजेऽपि देहे न नियोजितैः क्वचित् ।
पुंसो यमान्तं व्रजतोऽपि निष्ठुरै-
रेतैर्धनैः पञ्चपदी न दीयते ॥ १२१ ॥

अन्यच्च—

यथामिषं जले मत्स्यैर्भक्ष्यते श्वापदैर्भुवि ।
आकाशे पक्षिभिश्चैव तथा सर्वत्र वित्तवान् ॥ १२२ ॥
निर्दोषमपि वित्ताढ्यं दोषैर्योजयते नृपः ।
निर्धनः प्राप्तदोषोऽपि सर्वत्र निरुपद्रवः ॥ १२३ ॥
अर्थानामर्जने दुःखमर्जितानां च रक्षणे ।
नाशे दुःखं व्यये दुःखं धिगर्थान्कष्टसंश्रयान् ॥ १२४ ॥
अर्थार्थी यानि कष्टानि मूढोऽयं सहते जनः ।
शतांशेनापि मोक्षार्थी तानि चेन्मोक्षमाप्नुयात् ॥ १२५ ॥

अपरं विदेशवासजमपि वैराग्यं त्वया न कार्यम् । यतः—

को धीरस्य मनस्विनः स्वविषयः को वा विदेशः स्मृतो
यं देशं श्रयते तमेव कुरुते बाहुप्रतापार्जितम् ।
यद्दंष्ट्रानखलाङ्गुलप्रहरणैः सिंहो वनं गाहते
तस्मिन्नेव हतद्विपेन्द्ररुधिरैस्तृष्णां छिनत्त्यात्मनः ॥ १२६ ॥

अर्थहीनः परे देशे गतोऽपि यः प्रज्ञावान्भवति स कथंचिदपि न सीदति । उक्तं च—

कोऽतिभारः समर्थानां किं दूरं व्यवसायिनाम् ।
को विदेशः सविद्यानां कः परः प्रियवादिनाम् ॥ १२७ ॥

[1]तत्प्रज्ञानिधिर्भवान्न [2]प्राकृतपुरुषतुल्यः । अथवा—

उत्साहसंपन्नमदीर्घसूत्रं
क्रियाविधिज्ञं व्यसनेष्वसक्तम् ।
शूरं कृतज्ञं दृढसौहृदं च
लक्ष्मीः स्वयं याति निवासहेतोः ॥ १२८ ॥

अपरं प्राप्तोऽप्यर्थः [3]कर्मप्राप्त्या नश्यति । तदेतावन्ति दिनानि त्वदीयमासीत् । [4]मुहूर्त्तमप्यनात्मीयं भोक्तुं न लभ्यते । स्वयमागतमपि विधिनापह्रियते ।

अर्थस्योपार्जनं कृत्वा नैव भोगं समश्नुते ।
अरण्यं महदासाद्य मूढः सोमिलको यथा' ॥ १२९ ॥

हिरण्यक आह—'कथमेतत् ।' स आह—

## कथा (५)

कस्मिंश्चिदधिष्ठाने सोमिलको नाम कौलिको[5] वसति स्म । स चानेकविधपट्टरचनारञ्जितानि पार्थिवोचितानि वस्त्राण्युत्पादयति[6] । परं तस्य चानेकविधपट्टरचनानिपुणस्यापि न भोजनाच्छादनाभ्यधिकं कथमप्यर्थमात्रं संपद्यते । अथान्ये तत्र

१ प्रज्ञानिधिः बुद्धिमान् । २ प्राकृतपुरुषतुल्यः नीचजनसदृशः । ३ कर्मप्राप्त्या कर्मवशेन । ४ मुहूर्तं क्षणमात्रमपि अनात्मीयं अन्यदीयं वस्तु । ५ कौलिकः तन्तुवायाख्यजातिविशेषः (जुलाहा) ६ उत्पादयति—वयति ( बुनना ) ।

सामान्यकौलिकाः [1]स्थूलवस्त्रसंपादनविज्ञानिनो [2]महर्द्धिसंपन्नाः । तानवलोक्य स स्वभार्यामाह—'प्रिये, पश्यैतान्स्थूलपट्टकारकान्धनकनकसमृद्धान् । तदधारणकं[3] ममैतत्स्थानम् । तदन्यत्रोपार्जनाय गच्छामि ।' सा प्राह—'भोः प्रियतम, मिथ्या प्रलपितमेतद्यदन्यत्र गतानां धनं भवति स्वस्थाने न भवतीति । उक्तं च—

उत्पतन्ति यदाकाशे निपतन्ति महीतले ।
पक्षिणां तदपि प्राप्त्या नादत्तमुपतिष्ठति ॥ १३० ॥

तथा च—

न हि भवति यन्न भाव्यं भवति च भाव्यं विनापि यत्नेन ।
करतलगतमपि नश्यति यस्य तु भवितव्यता नास्ति ॥ १३१
यथा धेनुसहस्रेषु वत्सो विन्दति मातरम् ।
तथा पुराकृतं कर्म कर्तारमनुगच्छति ॥ १३२ ॥
शेते सह शयानेन गच्छन्तमनुगच्छति ।
नराणां प्राक्तनं कर्म तिष्ठेत्त्वथ सहात्मना ॥ १३३ ॥
यथा छायातपौ नित्यं सुसंबद्धौ परस्परम् ।
एवं कर्म च कर्ता च संश्लिष्टावितरेतरम् ॥ १३४ ॥

तस्मादत्रैव व्यवसायपरो भव ।' कौलिक आह—'प्रिये, न सम्यगभिहितं भवत्या । व्यवसायं विना कर्म न फलति । उक्तञ्च—

यथैकेन न हस्तेन तालिका संप्रपद्यते ।
तथोद्यमपरित्यक्तं न फलं कर्मणः स्मृतम् ॥ १३५ ॥

---

१ स्थूलवस्त्रनिर्माणे कुशलाः । २ महाधनिनः । ३ अधारणकं न धारकम् एतत् स्थानं, मां धारयितुं न इच्छतीत्यर्थः ।

पश्य कर्मवशात्प्राप्तं भोज्यकालेऽपि भोजनम् ।
हस्तोद्यमं विना वक्त्रे प्रविशेन्न कथंचन ॥ १३६ ॥

तथा च—

उद्योगिनं पुरुषसिंहमुपैति लक्ष्मी-
दैवं हि दैवमिति कापुरुषा वदन्ति ।
दैवं निहत्य कुरु पौरुषमात्मशक्त्या
यत्ने कृते यदि न सिद्ध्यति कोऽत्र दोषः ॥ १३७ ॥

तथा च—

उद्यमेन हि सिद्ध्यन्ति कार्याणि न मनोरथैः ।
नहि सिंहस्य सुप्तस्य प्रविशन्ति मुखे मृगाः ॥ १३८ ॥
उद्यमेन विना राजन्न सिद्ध्यन्ति मनोरथाः ।
कातरा इति जल्पन्ति यद्भाव्यं तद्भविष्यति ॥ १३९ ॥
स्वशक्त्या कुर्वतः कर्म न चेत्सिद्धिं प्रयच्छति ।
नोपालभ्यः पुमांस्तत्र दैवान्तरितपौरुषः ॥ १४० ॥

तन्मयावश्यं देशान्तरं गन्तव्यम् ।' इति निश्चित्य वर्धमानपुरं गतः । तत्र च वर्षत्रयं स्थित्वा सुवर्णशतत्रयोपार्जनं कृत्वा भूयः स्वगृहं प्रस्थितः । अथार्धपथे गच्छतस्तस्य कदाचिदटव्यां पर्यटतो भगवान्रविरस्तमुपागतः । तदासौ [1]व्यालभयात्स्थूलतरवटस्कन्धमारुह्य यावत्प्रसुप्तस्तावन्निशीथे[2] स्वप्ने द्वौ पुरुषौ [3]रौद्राकारौ परस्परं प्रजल्पन्तावशृणोत् । तत्रैक आह—'भोः [4]कर्त्तः, त्वं किं सम्यङ् न वेत्सि यदस्य सोमिलकस्य [5]भोजनाच्छादनाभ्यधिका समृद्धिर्नास्ति । तत्किं त्वयास्य सुवर्णशतत्रयं प्रदत्तम् ।' स आह—'भोः कर्मन्, मयावश्यं

१ व्यालभयात हिंस्रजन्तुभयात । २ निशीथे अर्धरात्रे । ३ रौद्राकारौ भयङ्करमूर्तिमन्तौ । ४ कर्त्तः कर्मफलदातः । ५ स्वनिर्वाहयोग्यान्नवस्त्राभ्यधिका सम्पत ।

दातव्यं [१]व्यवसायिनाम् । तत्र च तस्य [२]परिणतिस्त्वदायत्ता इति । अथ यावदसौ कौलिकः [३]प्रबुद्धः सुवर्णग्रन्थिमवलोकयति तावद्रिक्तं पश्यति । ततः [४]साक्षेपं चिन्तयामास—'अहो, किमेतत् महता कष्टेनोपार्जितं वित्तं हेलया क्वापि गतम् । [५]तद्व्यर्थश्रमोऽकिंचनः[६] कथं स्वपत्न्या मित्राणां च मुखं दर्शयिष्यामि ।' इति निश्चित्य तदेव पत्तनं गतः । तत्र च वर्षमात्रेणापि सुवर्णशतपञ्चकमुपार्ज्य भूयोऽपि स्वस्थानं प्रति प्रस्थितः । यावदर्धपथे भूयोऽटवीगतस्य भगवान्भानुरस्तं जगाम । अथ सुवर्णनाशभयात्सुश्रान्तोऽपि न विश्राम्यति । केवलं [७]कृतगृहोत्कण्ठः सत्वरं व्रजति । अत्रान्तरे द्वौ पुरुषौ तादृशौ दृष्टिदेशे समागच्छन्तौ जल्पन्तौ चाशृणोत् । तत्रैकः प्राह—'भोः कर्तः, किं त्वयैतस्य सुवर्णशतपञ्चकं प्रदत्तम् । तत्किं त्वं न वेत्सि, यद्भोजनाच्छादनाभ्यधिकमस्य किंचिन्नास्ति ।' स आह—'भोः कर्मन्, मयावश्यं देयं व्यवसायिनाम् । तस्य परिणामस्त्वदायत्तः । तत्किं [८]मामुपालम्भयसि ।' तच्छ्रुत्वा सोमिलको यावद्ग्रन्थिमवलोकयति तावत्सुवर्णं नास्ति । ततः परं दुःखमापन्नो व्यचिन्तयत्—'अहो, किं मम धनरहितस्य जीवितेन । तदत्र वटवृक्ष आत्मानमुद्बध्य प्राणांस्त्यजामि ।' एवं निश्चित्य [९]दर्भमयीं रज्जुं विधाय स्वकण्ठे पाशं नियोज्य शाखायामात्मानं निबध्य यावत्प्रक्षिपति तावदेकः पुमानाकाशस्थ एवेदमाह—'भो भोः सोमिलक, मैवं साहसं कुरु । अहं ते वित्तापहारकः । न ते भोजनाच्छादनाभ्यधिकां वरा-

१ उद्योगशीलानां । २ परिणतिः स्थितिः मया दत्तस्य धनस्य तस्य समीपे अवस्थानं, तवाधीनमित्यर्थः । ३ प्रबुद्धः जागरितः । ४ सखेदम् । ५ निष्फलपरिश्रमः । ६ निर्धनः । ७ कृता गृहम्प्रति उत्कण्ठा येन तथाभूतः । ८ तिरस्करोषि । ९ कुशनिर्मितां ।

टिकामपि सहामि । तद्गच्छ स्वगृहं प्रति । अन्यच्च भवदीयसाहसेनाहं तुष्टः । यथा मे न स्याद्व्यर्थं दर्शनम् । तत्प्रार्थ्यतामभीष्टो वरः कश्चित् ।' सोमिलक आह—'यद्येवं तद्देहि मे प्रभूतं धनम् ।' स आह—'भोः, किं करिष्यसि भोगरहितेन धनेन, यतस्तव भोजनाच्छादनाभ्यधिका प्राप्तिरपि नास्ति । उक्तं च—

किं तया क्रियते लक्ष्म्या या वधूरिव केवला ।
या न वेश्येव सामान्या पथिकैरुपभुज्यते ॥ १४१ ॥

सोमिलक आह—'यद्यपि तस्य धनस्य भोगो नास्ति, तथापि तद्भवतु । उक्तं च—

कृपणोऽप्यकुलीनोऽपि सज्जनैर्वर्जितः सदा ।
सेव्यते स नरो लोके यस्य स्याद्वित्तसंचयः ॥ १४२ ॥

तथा च—

शिथिलौ च सुबद्धौ च पततः पततो न वा ।
निरीक्षितौ मया भद्रे दश वर्षाणि पञ्च च' ॥ १४३ ॥

पुरुष आह—'किमेतत् ।' सोऽब्रवीत्—

## कथा ( ६ )

कस्मिंश्चिदधिष्ठाने [1]तीक्ष्णविषाणो नाम महावृषभः प्रतिवसति स्म । स च मदातिरेकात्परित्यक्तनिजयूथः शृङ्गाभ्यां नदीतटानि विदारयन्स्वेच्छया मरकतसदृशानि शष्पाणि भक्षयन्नरण्यचरो बभूव । अथ तत्रैव वने प्रलोभको नाम शृगालः प्रतिवसति स्म । स कदाचित्स्वभार्यया सह नदीतीरे सुखोपविष्टस्तिष्ठति । अत्रान्तरे स तीक्ष्णविषाणो जलार्थं तदेव पुलिनमवतीर्णः । ततश्च तस्य लम्बमानौ [2]वृषणाववलोक्य

१ तीक्ष्णौ निशितौ दृढौ वा विषाणौ शृङ्गौ यस्य सः । २ अण्डकोषौ ।

शृगाल्या शृगालोऽभिहितः—'स्वामिन्' पश्यास्य वृषभस्य मांसपिण्डौ लम्बमानौ यथा स्थितौ। तदेतौ क्षणेन प्रहरेण वा पतिष्यतः। एवं ज्ञात्वा भवता पृष्ठानुयायिना भाव्यम्।' शृगाल आह—'प्रिये, न ज्ञायते कदाचिदेतयोः पतनं भविष्यति वा न वा। तत्किं वृथा श्रमाय मां नियोजयसि। अत्रस्थस्तावज्जलार्थमागतान्मूषकान्भक्षयिष्यामि समं त्वया, मार्गोऽयं यतस्तेषाम्। अपरं यदि त्वां मुक्त्वास्य तीक्ष्णविषाणस्य वृषभस्य पृष्ठे गमिष्यामि, तदागत्यान्यः कश्चिदेतत्स्थानं समाश्रयिष्यति। नैतद्युज्यते कर्तुम्। उक्तं च—

यो ध्रुवाणि परित्यज्य अध्रुवाणि निषेवते।
ध्रुवाणि तस्य नश्यन्ति अध्रुवं नष्टमेव च' ॥ १४३ ॥

शृगाल्याह—'भोः, कापुरुषस्त्वम्। यत्किंचित्प्राप्तं तेनैव सन्तोषं करोषि। उक्तं च—

सुपूरा स्यात्कुनदिका सुपूरो मूषिकाञ्जलिः।
सुसंतुष्टः कापुरुषः स्वल्पकेनापि तुष्यति ॥ १४५ ॥

तस्मात्पुरुषेण सदैवोत्साहवता भाव्यम्। उक्तं च—

यत्रोत्साहसमारम्भो यत्रालस्यविहीनता।
नयविक्रमसंयोगस्तत्र श्रीरचला ध्रुवम् ॥ १४६ ॥
तद्दैवमिति संचिन्त्य त्यजेन्नोद्योगमात्मनः।
अनुयोगं विना तैलं तिलानां नोपजायते ॥ १४७ ॥

अन्यच्च—

यः स्तोकेनापि सन्तोषं कुरुते मन्दधीर्जनः।
तस्य भाग्यविहीनस्य दत्ता श्रीरपि मार्ज्यते ॥ १४८ ॥

यच्च त्वं वदसि, पतौ पतिष्यतो न वेति, तदप्ययुक्तम्।

उक्तं च—

कृतनिश्चयिनो वन्द्यास्तुङ्गिमा न प्रशस्यते ।
चातकः को वराकोऽयं यस्येन्द्रो वारिवाहकः ॥ १४९ ॥

अपरं मूषकमांसस्य [1]निर्विण्णाहम् । एतौ च मांसपिण्डौ पतनप्रायौ दृश्येते । तत्सर्वथा नान्यथा कर्तव्यम्' इति । अथासौ तदाकर्ण्य मूषकप्राप्तिस्थानं परित्यज्य तीक्ष्ण-विषाणस्य पृष्ठमन्वगच्छत् । अथवा साध्विदमुच्यते—

तावत्स्यात्सर्वकृत्येषु पुरुषोऽत्र स्वयं प्रभुः ।
स्त्रीवाक्याङ्कुशविक्षुण्णो यावन्नो ह्रियते बलात् ॥१५०॥
अकृत्यं मन्यते कृत्यमगम्यं मन्यते सुगम् ।
अभक्ष्यं मन्यते भक्ष्यं स्त्रीवाक्यप्रेरितो नरः ॥ १५१ ॥

एवं स तस्य पृष्ठतः सभार्यः परिभ्रमँश्चिरकालमनयत् । न च तयोः पतनमभूत् । ततश्च [2]निर्वेदात्पञ्चदशे वर्षे शृगालः स्वभार्यामाह—

शिथिलौ च सुबद्धौ च पततः पततो न वा ।
निरीक्षितौ मया भद्रे दश वर्षाणि पञ्च च ॥ १५२ ॥

'तयोस्तत्पश्चादपि पातो न भविष्यति । तत्तदेव स्वस्थानं गच्छावः' । अतोऽहं ब्रवीमि—शिथिलौ च सुबद्धौ च' इति ॥ पुरुष आह—'यद्येवं तद्गच्छ भूयोऽपि वर्धमानपुरम् । तत्र द्वौ वणिक्पुत्रौ वसतः । एको [3]गुप्तधनः, द्वितीय [4]उपभुक्तधनः । ततस्तयोः स्वरूपं बुद्ध्वैकस्य वरः प्रार्थनीयः । यदि ते धनेन प्रयोजनमभक्षितेन, ततस्त्वामपि गुप्तधनं करोमि । अथवा दत्तभोग्येन धनेन ते प्रयोजनं तदुपभुक्तधनं करोमि' इति ।

१ मूषकमांसभक्षणेन तृप्ता अतः परं तद्भक्षणे मम रुचिर्नास्तीति भावः
क्षतधनः । ४ व्ययितधनः ।

एवमुक्त्वाऽदर्शनं गतः । सोमिलकोऽपि विस्मितमना भूयोऽपि वर्धमानपुरं गतः । अथ संध्यासमये श्रान्तः कथमपि तत्पुरं प्राप्तो गुप्तधनगृहं पृच्छन्कृच्छ्राल्लब्ध्वास्तमितसूर्ये प्रविष्टः । अथासौ भार्यापुत्रसमेतेन गुप्तधनेन [1]निर्भर्त्स्यमानो हठाद्गृहं प्रविश्योपविष्टः । ततश्च भोजनवेलायां तस्यापि भक्तिवर्जितं किंचिदशनं दत्तम् । ततश्च भुक्त्वा तत्रैव यावत्सुप्तो निशीथे पश्यति तावत्तावपि द्वौ पुरुषौ परस्परं मन्त्रयतः । तत्रैक आह—'भोः कर्त्तः, किं त्वयास्य गुप्तधनस्यान्योऽधिको व्ययो निर्मितो यत्सोमिलकस्यानेन भोजनं दत्तम्? तदयुक्तं त्वया कृतम् ।' स आह—'भोः कर्मन् ! न ममात्र दोषः । मया पुरुषस्य लाभप्राप्तिर्दातव्या । तत्परिणतिः पुनस्त्वदायत्ता' इति । अथासौ यावदुत्तिष्ठति तावद् गुप्तधनो [2]विषूचिकया खिद्यमानो रुजाभिभूतः क्षणं तिष्ठति । ततो द्वितीयेऽह्नि तद्दोषेण कृतोपवासः संजातः सोमिलकोऽपि प्रभाते तद्गृहान्निष्क्रम्योपभुक्तधनगृहं गतः । तेनापि चाभ्युत्थानादिना सत्कृतो विहितभोजनाच्छादनसंमानस्तस्यैव गृहे भव्यशय्यामारुह्य सुष्वाप । ततश्च निशीथे यावत्पश्यति तावत्तावेव द्वौ पुरुषौ मिथो मन्त्रयतः । अथ तयोरेक आह—'भोः कर्त्तः, अनेन सोमिलकस्योपकारं कुर्वता प्रभूतो व्ययः कृतः । तत्कथय कथमस्योद्धारकविधि[3]र्भविष्यति । अनेन, सर्वमेतद्व्यवहारकगृहात्समानीतम् ।' स आह—'भोः कर्मन्, मम कृत्यमेतत् । परिणतिस्त्वदायत्ता' इति । अथ प्रभातसमये राजपुरुषो राजप्रसादजं वित्तमादाय समायात उपभुक्तधनाय समर्पया-

(१) निर्भर्त्स्यमानः = तिरस्क्रियमाणः । २ आधिविशेषेण ( हैजा ) । ३ परिशोधप्रकारः ।

मास। तद्दृष्ट्वा सोमिलकश्चिन्तयामास—सञ्चयरहितोऽपि वरमेष उपभुक्तधनः नासौ कदर्यो गुप्तधनः। उक्तं च—

अग्निहोत्रफला वेदाः शीलवित्तफलं श्रुतम्।
रतिपुत्रफला दारा दत्तभुक्तफलं धनम्॥ १५३॥

तद्विधाता मां दत्तभुक्तधनं करोतु। न कार्यं मे गुप्तधनेन।' ततः सोमिलको दत्तभुक्तधनः संजातः। अतोऽहं ब्रवीमि—'अर्थस्योपार्जनं कृत्वा' इति। तद्भद्र हिरण्यक, एवं ज्ञात्वा धनविषये संतापो न कार्यः। अथ विद्यमानमपि धनं [1]भोज्यवन्ध्यतया तदविद्यमानं मन्तव्यम्। उक्तं च—

गृहमध्यनिखातेन धनेन धनिनो यदि।
भवामः किं न तेनैव धनेन धनिनो वयम्॥ १५४॥

तथा च—

उपार्जितानामर्थानां त्याग एव हि रक्षणम्।
तडागोदरसंस्थानां परीवाह इवाम्भसाम्॥ १५५॥

दातव्यं भोक्तव्यं धनविषये संचयो न कर्तव्यः।
पश्येह मधुकरीणां संचितमर्थं हरन्त्यन्ये॥ १५६॥

अन्यच्च—

दानं भोगो नाशस्तिस्रो गतयो भवन्ति वित्तस्य।
यो न ददाति न भुङ्क्ते तस्य तृतीया गतिर्भवति॥ १५७॥

एवं ज्ञात्वा विवेकिना न स्थित्यर्थं वित्तोपार्जनं कर्तव्यम्, यतो दुःखाय तत्। उक्तं च—

धनादिकेषु विद्यन्ते येऽत्र मूर्खाः सुखाशया।
तप्ता ग्रीष्मेण सेवन्ते शैत्यार्थं ते हुताशनम्॥ १५८॥

---

१ भोक्तुमशक्यतया।

सर्पाः पिबन्ति पवनं न च दुर्बलास्ते
शुष्कैस्तृणैर्वनगजा बलिनो भवन्ति ।
कन्दैः फलैर्मुनिवरा गमयन्ति कालं
संतोष एव पुरुषस्य परं निधानम् ॥ १५९ ॥

संतोषामृततृप्तानां यत्सुखं शान्तचेतसाम् ।
कुतस्तद्धनलुब्धानामितश्चेतश्च धावताम् ॥ १६० ॥

पीयूषमिव संतोषं पिबतां निर्वृतिः परा ।
दुःखं निरन्तरं पुंसामसंतोषवतां पुनः ॥ १६१ ॥

निरोधाच्चेतसोऽक्षाणि निरुद्धान्यखिलान्यपि ।
आच्छादिते रवौ मेघैराच्छन्नाः स्युर्गभस्तयः ॥ १६२ ॥

वाञ्छाविच्छेदनं प्राहुः स्वास्थ्यं शान्ता महर्षयः ।
वाञ्छा निवर्तते नार्थैः पिपासेवाग्निसेवनैः ॥ १६३ ॥

अनिन्द्यमपि निन्दन्ति स्तुवन्त्यस्तुत्यमुच्चकैः ।
स्वापतेयकृते मर्त्याः किं किं नाम न कुर्वते ॥ १६४ ॥

धर्मार्थं यस्य वित्तेहा तस्यापि न शुभावहा ।
प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम् ॥ १६५ ॥

दानेन तुल्यो निधिरस्ति नान्यो
लोभाच्च नान्योऽस्ति रिपुः पृथिव्याम् ।
विभूषणं शीलसमं न चान्य-
त्संतोषतुल्यं धनमस्ति नान्यत् ॥ १६६ ॥

दारिद्र्यस्य पराभूतिर्यन्मानद्रविणाल्पता ।
जरद्गवधनः शर्वस्तथापि परमेश्वरः ॥ १६७ ॥

सकृत्कन्दुकपातेन पतत्यार्यः पतन्नपि ।
तथा पतति मूर्खस्तु मृत्पिण्डपतनं यथा ॥ १६८ ॥

एवं ज्ञात्वा भद्र, त्वया संतोषः कार्यः' इति मन्थरकवचनमाकर्ण्य वायस आह—'मन्थरको यदेवं वदति तत्त्वया चित्ते कर्तव्यम् । अथवा साध्विदमुच्यते—

सुलभाः पुरुषा राजन्सततं प्रियवादिनः ।
अप्रियस्य च पथ्यस्य वक्ता श्रोता च दुर्लभः ॥ १६९ ॥
अप्रियाण्यपि पथ्यानि ये वदन्ति नृणामिह ।
त एव सुहृदः प्रोक्ता अन्ये स्युर्नामधारकाः' ॥ १७० ॥

अथैवं जल्पतां तेषां चित्राङ्गो नाम हरिणो [1]लुब्धकत्रासितस्तस्मिन्नेव सरसि प्रविष्टः । अथायान्तं ससंभ्रममवलोक्य लघुपतनको वृक्षमारूढः । हिरण्यको निकटवर्तिनं [2]शरस्तम्बं प्रविष्टः । मन्थरकः सलिलाशयमास्थितः । अथ लघुपतनको मृगं सम्यक्परिज्ञाय मन्थरकमुवाच—'एह्येहि सखे मन्थरक, मृगोऽयं तृषार्तोऽत्र समायातः सरसि प्रविष्टः, तस्य शब्दोऽयं न मानुषसंभवः' इति । तच्छ्रुत्वा मन्थरको देशकालोचितमाह—'भो लघुपतनक, यथायं मृगो दृश्यते प्रभूतमुच्छ्वासमुद्वहन्नुद्भ्रान्तदृष्ट्या पृष्ठतोऽवलोकयति, तन्न तृषार्त एषः, नूनं लुब्धकत्रासितः । तज्ज्ञायतामस्य पृष्ठे लुब्धका आगच्छन्ति न वा' इति । उक्तं च—

भयत्रस्तो नरः श्वासं प्रभूतं कुरुते मुहुः ।
दिशोऽवलोकयत्येव न स्वास्थ्यं व्रजति क्वचित्' ॥ १७१ ॥

तच्छ्रुत्वा चित्राङ्ग आह—'भो मन्थरक, ज्ञातं त्वया सम्यङ् मे त्रासकारणम् । अहं लुब्धकशरप्रहारादुद्धारितः कृच्छ्रेणात्र समायातः । मम यूथं तैर्लुब्धकैर्व्यापादितं भविष्यति । तच्छरणागतस्य मे दर्शय किंचिदगम्यं स्थानं लुब्धकानाम् ।' तदाकर्ण्य मन्थरक आह—'भोश्चित्राङ्ग, श्रूयतां नीतिशास्त्रम्—

(१) व्याधभयाद् भीतः । (२) शरस्तम्बम्-शरनामकतृणगुच्छम् ।

द्वावुपायाविह प्रोक्तौ विमुक्तौ शत्रुदर्शने ।
हस्तयोश्चालनादेको द्वितीयः पादवेगजः ॥ १७२ ॥

तद्गम्यतां शीघ्रं सघनं वनम्, यावदत्रापि नागच्छन्ति ते दुरात्मानो लुब्धकाः ।' अत्रान्तरे लघुपतनकः सत्वरमभ्युपेत्योवाच—'भो मन्थरक, गतास्ते लुब्धकाः स्वगृहोन्मुखाः प्रचुरमांसपिण्डधारिणः । तच्चित्राङ्ग, त्वं [1]विश्रब्धो वनाद्बहिर्भव ।' ततस्ते चत्वारोऽपि मित्रभावमाश्रितास्तस्मिन्सरसि मध्याह्नसमये वृक्षच्छायाया अधस्तात्सुभाषितगोष्ठीसुखमनुभवन्तः[2] सुखेन कालं नयन्ति । अथवा युक्तमेतदुच्यते—

सुभाषितरसास्वादबद्धरोमाञ्चकञ्चुकाः ।
विनापि सङ्गमं स्त्रीणां सुधियः सुखमासते ॥ १७३ ॥
सुभाषितमयद्रव्यसंग्रहं न करोति यः ।
स तु प्रस्तावयज्ञेषु कां प्रदास्यति दक्षिणाम् ॥ १७४ ॥

तथा च—

सकृदुक्तं न गृह्णाति स्वयं वा न करोति यः ।
यस्य संपुटिका नास्ति कुतस्तस्य सुभाषितम् ॥ १७५ ॥

अथैकस्मिन्नहनि गोष्ठीसमये चित्राङ्गो नायातः । अथ ते व्याकुलीभूताः परस्परं जल्पितुमारब्धाः—'अहो, किमद्य सुहृन्न समायातः । किं सिंहादिभिः क्वापि व्यापादितः, उत लुब्धकैः, अथवा अनले प्रपतितो [3]गर्तविषमे वा [4]नवतृणलौल्यात्' इति । अथवा साध्विदमुच्यते—

स्वगृहोद्यानगतेऽपि स्निग्धैः पापं विशङ्क्यते मोहात् ।
किमु दृष्टबह्वपायप्रतिभयकान्तारमध्यस्थे ॥ १७६ ॥

(१) विश्रब्धः विश्वस्तः, शङ्कारहित इत्यर्थः ।
(२) सुभाषिते मनोहरालापे या गोष्ठी सभा तस्याः सुखम् ।
(३) गर्त्तवशान्निम्नोन्नतप्रदेशे । (४) सरसनूतन-तृणतृष्णावशात् ।

अथ मन्थरको वायसमाह—'भो, लघुपतनक, अहं हिरण्यकश्च तावद् द्वावप्यशक्तौ तस्यान्वेषणं कर्तुं मन्दगतित्वात् । तद्गत्वा त्वमरण्यं [1]शोधय यदि कुत्रचित्तं जीवन्तं पश्यसि' तदाकर्ण्य लघुपतनको नातिदूरे यावद्गच्छति तावत्पल्वलतीरे चित्राङ्गः कूटपाशनियन्त्रितस्तिष्ठति । तं दृष्ट्वा [2]शोकव्याकुलितमनास्तमवोचत्—'भद्र, किमिदम् ।' चित्राङ्गोऽपि वायसमवलोक्य विशेषेण दुःखितमना बभूव । अथवा युक्तमेतत् ।

अपि मन्दत्वमापन्नो नष्टो वापीष्टदर्शनात् ।
प्रायेण प्राणिनां भूयो दुःखावेगोऽधिको भवेत् ॥ १७७ ॥

ततश्च बाष्पावसाने चित्राङ्गो लघुपतनक आह—'भो मित्र, सञ्जातोऽयं तावन्मम मृत्युः । तद्युक्तं [3]संपन्नं यद्भवता सह मे दर्शनं सञ्जातम् । उक्तं च—

प्राणात्यये समुत्पन्ने यदि स्यान्मित्रदर्शनम् ।
तद्द्वाभ्यां सुखदं पश्चाज्जीवितोऽपि मृतस्य च ॥१७८ ॥

तत्क्षन्तव्यं यन्मया प्रणयात्सुभाषितगोष्ठीष्वभिहितम् । तथा हिरण्यकमन्थरकौ मम वाक्याद्वाच्यौ—

अज्ञानाज्ज्ञानतो वापि दुरुक्तं यदुदाहृतम् ।
तत्क्षन्तव्यं युवाभ्यां मे कृत्वा प्रीतिपरं मनः ॥ १७९ ॥

तच्छ्रुत्वा लघुपतनक आह—'भद्र, न भेतव्यमस्मद्विधैर्विद्यमानैः । यावदहं द्रुततरं हिरण्यकं गृहीत्वागच्छामि । अपरं ये सत्पुरुषा भवन्ति ते [4]व्यसने न [5]व्याकुलत्वमुपयान्ति ।

(१) गवेषय अवलोकयेति भावः । (२) शोकेन व्याकुलितं विह्वलीभूतं मनो यस्य सः । (३) युक्तम् उचितं, सम्पन्नं जातम् । (४) व्यसने विपदि । (५) व्याकुलत्वं-अधीरत्वम् ।

उक्तं च—

सम्पदि यस्य न हर्षो विपदि विषादो रणे च भीरुत्वम् ।
तं भुवनत्रयतिलकं जनयति जननी सुतं विरलम्' ॥ १८० ॥

एवमुक्त्वा लघुपतनकश्चित्राङ्गमाश्वास्य यत्र हिरण्यकमन्थरकौ तिष्ठतस्तत्र गत्वा सर्वं [1]चित्राङ्गपाशपतनं कथितवान् । हिरण्यकश्च [2]चित्राङ्गपाशमोक्षणं प्रति कृतनिश्चयं पृष्ठमारोप्य भूयोऽपि सत्वरं चित्राङ्गसमीपे गतः । सोऽपि मूषकमवलोक्य किंचिज्जीविताशया संश्लिष्ट आह—

'आपन्नाशाय विबुधैः कर्तव्याः सुहृदोऽमलाः ।
न तरत्यापदं कश्चिद्योऽत्र मित्रविवर्जितः ॥ १८१ ॥

हिरण्यक आह—'भद्र, त्वं तावन्नीतिशास्त्रज्ञो दक्षमतिः[3] । तत्कथमत्र कूटपाशे पतितः ।' स आह—'भोः, न कालोऽयं विवादस्य । तद्यावत्स पापात्मा लुब्धकः समभ्येति तावद् द्रुततरं कर्तयेमं मत्पाशम् ।' तदाकर्ण्य विहस्याह हिरण्यकः—किं मय्यपि समायाते लुब्धकाद्बिभेषि ? ततः शास्त्रं प्रति महती मे विरक्तिः सम्पन्ना, यद्भवद्विधा अपि नीतिशास्त्रविद एनामवस्थां प्राप्नुवन्ति । तेन त्वां पृच्छामि ।' स आह—'भद्र, कर्मणा बुद्धिरपि हन्यते । उक्तं च—

कृतान्तपाशबद्धानां दैवोपहतचेतसाम् ।
बुद्धयः कुब्जगामिन्यो भवन्ति महतामपि ॥ १८२ ॥
विधात्रा रचिता या सा ललाटेऽक्षरमालिका ।
न तां मार्जयितुं शक्ताः स्वबुद्ध्याप्यतिपण्डिताः' ॥ १८३

(१) चित्राङ्गस्य एतन्नामकमृगस्य पाशे जाले पतनं बन्धनमित्यर्थः ।
(२) चित्राङ्गस्य पाशात् जालात् मोक्षणं परित्राणम् ।
(३) दक्षमतिः-निपुणबुद्धिः ।

एवं तयोः प्रवदतोः [1]सुहृद्व्यसनसंतप्तहृदयो मन्थरकः शनैः शनैस्तं प्रदेशमाजगाम । तं दृष्ट्वा लघुपतनको हिरण्यकमाह—'अहो न शोभनमापतितम् ।' हिरण्यक आह—'किं स लुब्धकः समायाति ।' स आह—'आस्तां तावल्लुब्धकवार्त्ता । एष मन्थरकः समागच्छति । तदनीतिरनुष्ठितानेन, यतो वयमस्य कारणान्नूनं व्यापादनं यास्यामो यदि स पापात्मालुब्धकः समागमिष्यति । तदहं तावत्खमुत्पतिष्यामि । त्वं पुनर्बिलं प्रविश्यात्मानं रक्षयिष्यसि । चित्राङ्गोऽपि वेगेन दिगन्तरं यास्यति । एष पुनर्जलचरः स्थले कथं भविष्यतीति व्याकुलोऽस्मि ।' अत्रान्तरे प्राप्तोऽयं मन्थरकः । हिरण्यक आह—'भद्र, न युक्तमनुष्ठितं भवता, यदत्र समायातः । तद्भूयोऽपि द्रुततरं गम्यताम्, यावदसौ लुब्धको न समायाति ।' मन्थरक आह—'भद्र, किं करोमि, न शक्नोमि तत्रस्थो मित्रव्यसनाग्निदाहं सोढुम् । तेनाहमत्रागतः । अथवा साध्विदमुच्यते—

दयितजनविप्रयोगा वित्तवियोगाश्च केन सह्याः स्युः ।
यदि सुमहौषधिकल्पो वयस्यजनसंगमो न स्यात् ॥ १८४ ॥
वरं प्राणपरित्यागो न वियोगो भवादृशैः ।
प्राणा जन्मान्तरे भूयो भवन्ति न भवद्विधाः ॥ १८५ ॥

एवं तस्य प्रवदत [2]आकर्णपूरितशरासनो लुब्धकोऽप्युपागतः तं दृष्ट्वा मूषकेण तस्य स्नायुपाशस्तत्क्षणात्खण्डितः । अत्रान्तरे चित्राङ्गः सत्वरं पृष्ठमवलोकयन्प्रधावितः । लघुपतनको वृक्षमारूढः । हिरण्यकश्च समीपवर्ति बिलं प्रविष्टः । अथासौ लुब्धको मृगगमनाद्विषण्णवदनो[3] व्यर्थश्रमस्तं मन्थरकं मन्दं

(१) सुहृदो मित्रस्य व्यसनश्रवणेन विपदुच्छ्रवणेन दुःखितचित्त इत्यर्थः ।
(२) आकर्णपूरितशरासनः–कर्णपर्यन्तं आकृष्टधनुः ।
(३) विषण्णवदनः–खिन्नमुखः ।

मन्दं स्थलमध्ये गच्छन्तं दृष्टवान्, अचिन्तयच्च—'यद्यपि कुरङ्गो धात्रापहृतस्तथाप्ययं कूर्म आहारार्थं संपादितः । तदद्यास्यामिषेण मे कुटुम्बस्याहारनिर्वृत्तिर्भविष्यति ।' एवं विचिन्त्य तं दर्भैः संच्छाद्य धनुषि समारोप्य स्कन्धे कृत्वा गृहं प्रति प्रस्थितः । अत्रान्तरे तं नीयमानमवलोक्य हिरण्यको दुःखाकुलः पर्यदेवयत्—'कष्टं भोः, कष्टमापतितम् ।

एकस्य दुःखस्य न यावदन्तं
गच्छाम्यहं पारमिवार्णवस्य ।
तावद् द्वितीयं समुपस्थितं मे
छिद्रेष्वनर्था बहुलीभवन्ति ॥ १८६ ॥

तावदस्खलितं यावत्सुखं याति समे पथि ।
स्खलिते च समुत्पन्ने विषमं च पदे पदे ॥ १८७ ॥

यन्नम्रं सरलं चापि तच्चापत्सु न सीदति ।
धनुर्मित्रं कलत्रं च दुर्लभं शुद्धवंशजम् ॥ १८८ ॥

न मातरि न दारेषु न सोदर्ये न चात्मजे ।
विश्रम्भस्तादृशः पुंसां यादृङ्मित्रे निरन्तरे ॥ १८९ ॥

यदि तावत्कृतान्तेन मे धननाशो विहितस्तन्मार्गश्रान्तस्य मे विश्रामभूतं मित्रं कस्मादपहृतम् । अपरमपि मित्रं परं मन्थरकसमं न स्यात् । उक्तं च—

असंपत्तौ परो लाभो गुह्यस्य कथनं तथा ।
आपद्विमोक्षणं चैव मित्रस्यैतत्फलत्रयम् ॥ १९० ॥

तदस्य पश्चान्नान्यः सुहृन्मे । तत्किं ममोपर्यनवरतं व्यसनशरैर्वर्षति हन्त विधिः । यत आदौ तावद्वित्तनाशः, ततः परिवारभ्रंशः, ततो देशत्यागः, ततो मित्रवियोग इति । अथवा स्वरूपमेतत्सर्वेषामेव जन्तूनां जीवितधर्मस्य च । उक्तं च—

कायः संनिहितापायः संपदः क्षणभङ्गुराः ।
समागमाः सापगमाः सर्वेषामेव देहिनाम् ॥ १९१ ॥

तथा च—

क्षते प्रहारा निपतन्त्यभीक्ष्णं
धनक्षये दीप्यति जाठराग्निः ।
आपत्सु वैराणि समुल्लसन्ति
छिद्रेष्वनर्था बहुलीभवन्ति ॥ १९२ ॥

अहो साधूक्तं केनापि—

प्राप्ते भये परित्राणं प्रीतिविश्रम्भभाजनम् ।
केन रत्नमिदं सृष्टं मित्रमित्यक्षरद्वयम् ॥ १९३ ॥

अत्रान्तरे [1]चाक्रन्दपरौ चित्राङ्गलघुपतनकौ तत्रैव समायातौ । अथ हिरण्यक आह—'अहो, किं वृथा प्रलपितेन । तद्यावदेष मन्थरको दृष्टिगोचरान्न नीयते, तावदस्य [2]मोक्षोपायश्चिन्त्यताम्' इति । उक्तं च—

'व्यसनं प्राप्य यो मोहात्केवलं परिदेवयेत् ।
क्रन्दनं वर्धयत्येव तस्यान्तं नाधिगच्छति ॥ १९४ ॥
केवलं व्यसनस्योक्तं भेषजं नयपण्डितैः ।
तस्योच्छेदसमारम्भो विषादपरिवर्जनम् ॥ १९५ ॥

अन्यच्च—

अतीतलाभस्य सुरक्षणार्थं
भविष्यलाभस्य च सङ्गमार्थम् ।
आपत्प्रपन्नस्य च मोक्षणार्थं
यन्मन्त्र्यतेऽसौ परमो हि मन्त्रः' ॥ १९६ ॥

(१) रुदन्तौ । (२) रक्षणोपायः ।

तच्छ्रुत्वा वायस आह—'भोः, यद्येवं तत्क्रियतां मद्वचः । एष चित्राङ्गोऽस्य[1] मार्गे गत्वा किंचित्पल्वलमासाद्य[2] तस्य तीरे निश्चेतनो भूत्वा पततु । अहमप्यस्य शिरसि समारुह्य मन्दैश्चञ्चुप्रहारैः शिर उल्लेखयिष्यामि, येनासौ दुष्टलुब्धकोऽमुं मृतं मत्वा मम [3]चञ्चुप्रहरणप्रत्ययेन मन्थरकं भूमौ क्षिप्त्वा मृगार्थं परिधाविष्यति । अत्रान्तरे त्वया दर्भमयानि पाशानि, खण्डनीयानि येनासौ मन्थरको द्रुततरं पल्वलं प्रविशति ।' चित्राङ्ग आह—'भोः' भद्रोऽयं त्वया दृष्टो मन्त्रः[4] । नूनं मन्थरकोऽयं मुक्तो मन्तव्यः' इति । उक्तं च—

सिद्धं वा यदि वाऽसिद्धं चित्तोत्साहो निवेदयेत् ।
प्रथमं सर्वजन्तूनां तत्प्राज्ञो वेत्ति नेतरः ॥ १९७ ॥

तदेवं क्रियताम्' इति । तथानुष्ठिते स लुब्धकस्तथैव [5]मार्गासन्नपल्वलतीरस्थं चित्राङ्गं वायससनाथमपश्यत् । तं दृष्ट्वा हर्षितमना व्यचिन्तयत्—नूनं [6]पाशबन्धनवेदनया वराकोऽयं मृगः [7]सावशेषजीवितः पाशं त्रोटयित्वा कथमप्येतद्वनान्तरं यावत्प्रविष्टस्तावन्मृतः । तद्वश्योऽयं मे कच्छपः [8]सुयन्त्रितत्वात् । तदेनमपि तावद् गृह्णामि । इत्यवधार्य कच्छपं भूतले प्रक्षिप्य मृगमुपाद्रवत् । एतस्मिन्नन्तरे हिरण्यकेन [9]वज्रोपमदंष्ट्राप्रहरणेन तद्दर्भवेष्टनं खण्डशः कृतम् । मन्थरको-

(१) अस्य लुब्धकस्य । (२) अल्पजलं सरः । (३) चञ्चुभ्यां यत् प्रहरणं प्रहारः (उल्लेखनं यावत्) तेन यः प्रत्ययः मृत इति विश्वासः तेन । (४) मन्त्रः, उपाय इत्यर्थः । (५) मार्गस्य समीपे यः पल्वलः अल्पजलाशयः तस्य तीरस्थितमित्यर्थः । (६) जालबन्धनकष्टेन । (७) सावशेषं स्वल्पावशिष्टं जीवितं यस्य सः । (८) दृढबद्धत्वात् । (९) वज्रोपमायाः वज्रतुल्यायाः दंष्ट्रायाः प्रहरणेन प्रहारेण ।

ऽपि तृणमध्यान्निष्क्रम्य समीपवर्तिनं पल्वलं प्रविष्टः । चित्राङ्गोऽप्यप्राप्तस्यापि तस्य तल उत्थाय वायसेन सह पलायितः । एतस्मिन्नन्तरे विलक्षो[1] विषादपरो[2] लुब्धको निवृत्तो यावत्पश्यति, तावत्कच्छपोऽपि गतः । ततश्च तत्रोपविश्येमं श्लोकमपठत्—

'प्राप्तो बन्धनमप्ययं गुरुमृगस्तावत्त्वया मे हृतः
संप्राप्तः कमठः स चापि नियतं नष्टस्तवादेशतः ।
क्षुत्क्षामोऽत्र वने भ्रमामि शिशुकैस्त्यक्तः समं भार्यया
यच्चान्यन्न कृतं कृतान्त कुरु ते तच्चापि सह्यं मया' ॥१९८॥

एवं बहुविधं विलप्य स्वगृहं गतः । अथ तस्मिन्व्याधे दूरतरं गते सर्वेऽपि ते काककूर्ममृगमूषिकाः परमानन्दभाजः परस्परमालिङ्ग्य पुनर्जातमिवात्मानं मन्यमानास्तदेव सरः संप्राप्य महासुखेन सुभाषितकथागोष्ठीविनोदेन कालं नयन्ति स्म । एवं ज्ञात्वा विवेकिना मित्रसंग्रहः कार्यः । न च मित्रेण सह व्याजेन वर्तितव्यमिति । उक्तं च यतः—

यो मित्राणि करोत्यत्र न कौटिल्येन वर्तते ।
तैः समं न पराभूतिं संप्राप्नोति कथञ्चन ॥ १९९ ॥

इति श्रीविष्णुशर्मविरचिते पञ्चतन्त्रके मित्रसंप्राप्तिर्नाम द्वितीयं तन्त्रं समाप्तम् ।

---

(१) विलक्षः–लज्जितः ।
(२) विषादपरः–अत्यन्तं दुःखितः ।

# काकोलूकीयम् । *

अथेदमारभ्यते [1]काकोलूकीयं नाम तृतीयं तन्त्रम् । यस्यायमाद्यः श्लोकः—

न विश्वसेत्पूर्वविरोधितस्य
शत्रोश्च मित्रत्वमुपागतस्य ।
दग्धां गुहां पश्य उलूकपूर्णां
काकप्रणीतेन हुताशनेन ॥ १ ॥

तद्यथानुश्रूयते—अस्ति दाक्षिणात्ये जनपदे महिलारोप्यं नाम नगरम् । तस्य [1]समीपस्थोऽनेकशाखासनाथोऽ[2]तिघनतरपत्रच्छन्नो न्यग्रोधपादपोऽस्ति । तत्र च मेघवर्णो नाम वायसराजोऽनेककाकपरिवारः प्रतिवसति स्म । स तत्र [3]विहितदुर्गरचनः सपरिजनः कालं नयति स्म । तथान्योऽरिमर्दनो नामोलूकराजोऽसंख्योलूकपरिवारो [4]गिरिगुहादुर्गाश्रयः प्रतिवसति स्म । स च रात्रावभ्येत्य सदैव तस्य न्यग्रोधस्य समन्तात्परिभ्रमति । अथोलूकराजः [5]पूर्वविरोधवशाद्यं कश्चिद्वायसं समासादयति तं व्यापाद्य गच्छति । एवं नित्याभिगमनाच्छनैः शनै-

---

* काकश्च उलूकश्च तयोः समाहारः काकोलूकं, तदधिकृत्य कृतन्तन्त्रं काकोलूकीयम् ।

१ अनेकाभिः शाखाभिः सनाथः सहितः २ अतिघनतरैः अतिनिविडैः पत्रैः पलाशैः छन्न आवृतः । ३ विहिता कृता दुर्गरचना दुर्गनिर्माणं येन तथाभूतः । (४) गिरेः पर्वतस्य गुहा एव कन्दरैव दुर्गस्तस्य आश्रयो यस्य सः । (५) पूर्वविरोधवशात् पूर्ववैरहेतुना ।

# काकोलूकीयम् । *

अथेदमारभ्यते [1]काकोलूकीयं नाम तृतीयं तन्त्रम् । यस्यायमाद्यः श्लोकः—

न विश्वसेत्पूर्वविरोधितस्य
शत्रोश्च मित्रत्वमुपागतस्य ।
दग्धां गुहां पश्य उलूकपूर्णां
काकप्रणीतेन हुताशनेन ॥ १ ॥

तद्यथानुश्रूयते—अस्ति दाक्षिणात्ये जनपदे महिलारोप्यं नाम नगरम् । तस्य[1]समीपस्थोऽनेकशाखासनाथोऽ[2]तिघनतरपत्रच्छन्नो न्यग्रोधपादपोऽस्ति । तत्र च मेघवर्णो नाम वायसराजोऽनेककाकपरिवारः प्रतिवसति स्म । स तत्र [3]विहितदुर्गरचनः सपरिजनः कालं नयति स्म । तथान्योऽरिमर्दनो नामोलूकराजोऽसख्योलूकपरिवारो [4]गिरिगुहादुर्गाश्रयः प्रतिवसति स्म । स च रात्रावभ्येत्य सदैव तस्य न्यग्रोधस्य समन्तात्परिभ्रमति । अथोलूकराजः [5]पूर्वविरोधवशाद्यं कञ्चिद्वायसं समासादयति तं व्यापाद्य गच्छति । एवं नित्याभिगमनाच्छनैः शनै-

* काकश्च उलूकश्च तयोः समाहारः काकोलूकं, तदधिकृत्य कृतन्तन्त्रं काकोलूकीयम् ।

१ अनेकाभिः शाखाभिः सनाथः सहितः २ अतिघनतरैः अतिनिबिडैः पत्रैः पलाशैः छन्न आवृतः । ३ विहिता कृता दुर्गरचना दुर्गनिर्माणं येन तथाभूतः । ( ४ ) गिरेः पर्वतस्य गुहा एव कन्दरैव दुर्गस्तस्य आश्रयो यस्य सः । (५) पूर्वविरोधवशात् पूर्ववैरहेतुना ।

स्त[1]न्यग्रोधपादपदुर्गं तेन समन्तान्निर्वायसं कृतम् । अथवा भवत्येवम् । उक्तं च—

> य उपेक्षेत शत्रुं स्वं प्रसरन्तं यदृच्छया ।
> रोगं चालस्यसंयुक्तं स शनैस्तेन हन्यते ॥ २ ॥

तथा च—

> जातमात्रं न यः शत्रुं व्याधिं च प्रशमं नयेत् ।
> अतिपुष्टाङ्गयुक्तोऽपि स पश्चात्तेन हन्यते ॥ ३ ॥

अथान्येद्युः स वायसराजः सर्वान्वायससचिवानाहूय प्रोवाच—'भोः, उत्कटस्तावदस्माकं शत्रुरुद्यमसंपन्नश्च[2] कालवशान्नित्यमेव निशागमे समेत्यास्मत्पक्षकदनं[3] करोति । तत्कथमस्य [4]प्रतिविधानम् । वयं तावद्रात्रौ न पश्यामः, न च तस्य दिवा दुर्गं विजानीमः; येन गत्वा प्रहरामः । तदत्र विषये किं युज्यते संधि-विग्रह-यान-आसन-संश्रय-द्वैधीभावानामेकतमस्य क्रियमाणस्य । तद्विचार्य शीघ्रं कथयन्तु भवन्तः ।' अथ ते प्रोचुः—'युक्तमभिहितं देवेन यदेष प्रश्नः कृतः—

उक्तं च—

> अपृष्टेनापि वक्तव्यं सचिवेनात्र किंचन ।
> पृष्टेन तु स्रुतं पथ्यं वाच्यं च प्रियमप्रियम् ॥ ४ ॥
> यो न पृष्टो हितं ब्रूते परिणामे सुखावहम् ।
> सुमंत्री प्रियवक्ता च केवलं स रिपुः स्मृतः ॥ ५ ॥
> तस्मादेकान्तमासाद्य कार्यो मन्त्रो महीपतेः ।
> येन तस्य वयं कुर्मो निर्णयं कारणं तथा ॥ ६ ॥

---

(१) न्यग्रोधपादपः—वटवृक्षः एव दुर्गं शत्रुप्रवेशनिवारणार्थं दुर्गमस्थानमित्यर्थः । (२) उद्यमसम्पन्नः—उत्साहसहितः । (३) अस्मत्पक्षकदनम्—अस्मत्पक्षीयाणां प्राणिनां विनाशम् । ४ प्रतिविधानं—प्रतिकारः ।

अथ स [1]मेघवर्णोऽन्वयागत-उज्जीवि-संजीवि-अनुजीवि-प्रजीवि-चिरञ्जीविनाम्नः पञ्च सचिवान्प्रत्येकं प्रष्टुमारब्धः । तत्रैतेषामादौ तावदुज्जीविनं पृष्टवान्—'भद्र, एवं स्थिते किं मन्यते भवान् ।' स आह—'राजन् बलवता सह विग्रहो न कार्यः । यथा स बलवान्कालप्रहर्ता[2] च । उक्तं च यतः—

बलीयसे प्रणमतां काले प्रहरतामपि ।
संपदो नापगच्छन्ति प्रतीपमिव निम्नगा ॥ ७ ॥

तथा च—

संत्याज्यो धार्मिकश्चार्यो भ्रातृसंघातवान्बली ।
अनेकावजयो चैव संधेयः स रिपुर्भवेत् ॥ ८ ॥
संधिः कार्योऽप्यनार्येण विज्ञाय प्राणसंशयम् ।
प्राणैः संरक्षितैः सर्वं यतो भवति रक्षितम् ॥ ९ ॥

येनानेकयुद्धविजयी स तेन विशेषात्संधेयः । उक्तं च—

अनेकयुद्धविजयी संधानं यस्य गच्छति ।
तत्प्रभावेण तस्याशु वशं गच्छन्त्यरातयः ॥ १० ॥
संधिमिच्छेत्समेनापि संदिग्धो विजयो युधि ।
न हि सांशयिकं कुर्यादित्युवाच बृहस्पतिः ॥ ११ ॥
संदिग्धो विजयो युद्धे जनानामिह युध्यताम् ।
उपायत्रितयादूर्ध्वं तस्माद्युद्धं समाचरेत् ॥ १२ ॥
असंदधानो मानाढ्यः समेनापि हतो भृशम् ।
आमकुम्भ इवान्येन करोत्युभयसंक्षयम् ॥ १३ ॥
समं शक्तिमता युद्धमशक्तस्य हि मृत्यवे ।
दृषत्कुम्भं यथा भित्त्वा तावत्तिष्ठति शक्तिमान् ॥१४॥

---

(१) अन्वयागतान् वंशक्रमागतान्-उज्जीवि-सञ्जीवि-अनुजीवि-प्रजीवि-चिरञ्जीविसंज्ञकान् पञ्च मन्त्रिणः । (२) मत्तोऽधिकबलशाली, कालप्रहर्ता समयस्य बलाबलं विविच्य प्रहारकः, विपदि प्रहर्त्तेत्यर्थः ।

अन्यच्च—

भूमिर्मित्रं हिरण्यं वा विग्रहस्य फलत्रयम् ।
नास्त्येकमपि यद्येषां विग्रहं न समाचरेत् ॥ १५ ॥
खनन्नाखुबिलं सिंहः पाषाणशकलाकुलम् ।
प्राप्नोति नखभङ्गं वा फलं वा मूषको भवेत् ॥ १६ ॥
तस्मान्न स्यात्फलं यत्र दुष्टं युद्धं तु केवलम् ।
न तत्स्वयं समुत्पाद्यं कर्त्तव्यं न कथञ्चन ॥ १७ ॥
बलीयसा समाक्रान्तो वैतसीं वृत्तिमाचरेत् ।
वाञ्छन्नभ्रंशिनीं लक्ष्मीं न भौजङ्गीं कदाचन ॥ १८ ॥
कुर्वन्हि वैतसीं वृत्तिं प्राप्नोति महतीं श्रियम् ।
भुजङ्गवृत्तिमापन्नो वधमर्हति केवलम् ॥ १९ ॥
कौर्मं संकोचमास्थाय प्रहारानपि मर्षयेत् ।
काले काले च मतिमानुत्तिष्ठेत्कृष्णसर्पवत् ॥ २० ॥
आग्रहं विग्रहं मत्वा सुसाम्ना प्रशमं नयेत् ।
विजयस्य ह्यनित्यत्वाद्रभसं च समुत्सृजेत् ॥ २१ ॥

तथा च—

बलिना सह योद्धव्यमिति नास्ति निदर्शनम् ।
प्रतिवातं नहि घनः कदाचिदुपसर्पति' ॥ २२ ॥

एवमुज्जीवी [1]साममन्त्रं संधिकारं क्लृप्तवान् ।

अथ तच्छ्रुत्वा संजीविनमाह—'भद्र, तवाभिप्रायमपि श्रोतुमिच्छामि ।' स आह—देव, न ममैतत्प्रतिभाति यच्छत्रुणा सह संधिः क्रियते । उक्तं च यतः—

शत्रुणा न हि संदध्यात्सुश्लिष्टेनापि संधिना ।
सुतप्तमपि पानीयं शमयत्येव पावकम् ॥ २३ ॥

---

१ साम्नः मन्त्रं, सन्धिकारं सन्धिकरणोपयोगिनमिति भावः, क्लृप्तवान् निर्णीतवान् ।

अपरं च स क्रूरोऽत्यन्तलुब्धो धर्मरहितः । तत्त्वया विशेषान्न संधेयः । उक्तं च यतः—

सत्यधर्मविहीनेन न संदध्यात्कथञ्चन ।
सुसंधितोऽप्यसाधुत्वादचिराद्याति विक्रियाम् ॥ २४ ॥

तस्मात्तेन सह योद्धव्यमिति मे मतिः । उक्तं च यतः—

क्रूरो लुब्धोऽलसोऽसत्यः प्रमादी भीरुरस्थिरः ।
मूढो युद्धावमन्ता च सुखोच्छेद्यो भवेद्रिपुः ॥ २५ ॥

अपरं तेन पराभूता वयम् । तद्यदि [1]संधानकीर्तनं करिष्यामः स भूयोऽत्यन्तं कोपं करिष्यति । उक्तं च—

चतुर्थोपायसाध्ये तु रिपौ सान्त्वमपक्रिया ।
स्वेद्यमामज्वरं प्राज्ञः कोऽम्भसा परिषिञ्चति ॥ २६ ॥
सामवादाः सकोपस्य शत्रोः प्रत्युत दीपकाः ।
प्रतप्तस्येव सहसा सर्पिषस्तोयबिन्दवः ॥ २७ ॥

यदेवैतद्वदति रिपुर्बलवान्, तदप्यकारणम् । उक्तं च यतः—

सोत्साहशक्तिसंपन्नो हन्याच्छत्रुं लघुर्गुरुम् ।
यथा कण्ठीरवो नागे सुसाम्राज्यं प्रपद्यते ॥ २८ ॥
मायया शत्रवो वध्या अवध्याः स्युर्बलेन ये ।
यथा स्त्रीरूपमास्थाय हतो भीमेन कीचकः ॥ २९ ॥

तथा च—

मृत्योरिवोग्रदण्डस्य राज्ञो यान्ति वशं द्विषः ।
शष्पतुल्यं हि मन्यन्ते दयालुं रिपवो नृपम् ॥ ३० ॥
न याति शमनं यस्य तेजस्तेजस्वितेजसा ।
वृथा यातेन किं तेन मातुर्यौवनहारिणा ॥ ३१ ॥

---

१ सन्धिप्रस्तावम् ।

या लक्ष्मीर्नानुलिप्ताङ्गी वैरिशोणितकुङ्कमैः ।
कान्ताऽपि मनसः प्रीतिं न सा धत्ते मनस्विनाम् ॥ ३२॥
रिपुरक्तेन संसिक्तारिस्त्रीनेत्राम्बुभिस्तथा ।
न भूमिर्यस्य भूपस्य का श्लाघा तस्य जीवने ॥ ३३ ॥

एवं संजीवी विग्रहमन्त्रं विज्ञापयामास ।

अथ तच्छ्रुत्वानुजीविनमपृच्छत्—'भद्र, त्वमपि स्वाभिप्रायं निवेदय ।' सोऽब्रवीत्—'देव, दुष्टः स बलाधिको निर्मर्यादश्च । तत्तेन सह संधिविग्रहौ न युक्तौ । केवलं यानमर्हं स्यात् । उक्तं च—

बलोत्कटेन दुष्टेन मर्यादारहितेन च ।
न संधिविग्रहौ नैव विना यानं प्रशस्यते ॥ ३४ ॥
द्विधाकारं भवेद्यानं भयत्रस्तप्ररक्षणम् ।
एकमन्यज्जिगीषोश्च यात्रालक्षणमुच्यते ॥ ३५ ॥
कार्तिके वाथ चैत्रे वा विजिगीषोः प्रशस्यते ।
यानमुत्कृष्टवीर्यस्य शत्रुदेशे न चान्यदा ॥ ३६ ॥
अवस्कन्दप्रदानस्य सर्वे कालाः प्रकीर्तिताः ।
व्यसने वर्तमानस्य शत्रोश्छिद्रान्वितस्य च ॥ ३७ ॥
स्वस्थानं सुदृढं कृत्वा शूरैश्चाप्तैर्महाबलैः ।
परदेशं ततो गच्छेत्प्रणिधिव्याप्तमग्रतः ॥ ३८ ॥
अज्ञातविविधासारतोयशस्यो व्रजेत्तु यः ।
परराष्ट्रं स नो भूयः स्वराष्ट्रमधिगच्छति ॥ ३९ ॥

तत्ते युक्तं[1] कर्तुमपसरणम् । अन्यच्च—

न विग्रहं न संधानं बलिना तेन पापिना ।
कार्यलाभमपेक्ष्यापसरणं क्रियते बुधैः ॥ ४० ॥

१ अपसरणं यानम् ।

उक्तं च यतः—

यदपसरति मेषः कारणं तत्प्रहर्तुं
मृगपतिरपि कोपात्संकुचत्युत्पतिष्णुः ।
हृदयविहितवैरा गूढमन्त्रोपचाराः
किमपि विगणयन्तो बुद्धिमन्तः सहन्ते ॥ ४१ ॥

अन्यच्च—

बलवन्तं रिपुं दृष्ट्वा देशत्यागं करोति यः ।
युधिष्ठिर इवाप्नोति पुनर्जीवन्स मेदिनीम् ॥ ४२ ॥

युध्यतेऽहंकृतिं कृत्वा दुर्बलो यो बलीयसा ।
स तस्य वाञ्छितं कुर्यादात्मनश्च कुलक्षयम् ॥ ४२ ॥

तद्बलवताभियुक्तस्यापसरणसमयोऽयं न संधेर्विग्रहस्य च ।' एवमनुजीविमन्त्रोऽपसरणस्य ।

अथ तस्य वाक्यं समाकर्ण्य प्रजीविनमाह—'भद्र, त्वमप्यात्मनोऽभिप्रायं वद ।' सोऽब्रवीत्- -'देव मम संधिविग्रहयानानि त्रीण्यपि न प्रतिभान्ति । [1]विशेषतश्चासनं प्रतिभाति ।

उक्तं च यतः—

नक्रः स्वस्थानमासाद्य गजेन्द्रमपि कर्षति ।
स एव प्रच्युतः स्थानाच्छुनापि परिभूयते ॥ ४४ ॥

अन्यच्च—

अभियुक्तो बलवता दुर्गे तिष्ठेत्प्रयत्नवान् ।
तत्रस्थः सुहृदाह्वानं प्रकुर्वीतात्ममुक्तये ॥ ४५ ॥
यो रिपोरागमं श्रुत्वा भयसंत्रस्तमानसः ।
स्वं स्थानं संत्यजेत्तत्र न स भूयो वसेन्नरः ॥ ४६ ॥

---

(१) आसनम्-नायमिदानीमस्माकं युद्धकालः किन्तु युद्धसाधनं सैन्यादि सम्यक् संस्कार्य उचितावसरप्रतीक्षया स्वस्थान एवावस्थानमुचितम् ।

दंष्ट्राविरहितः सर्पो मदहीनो यथा गजः ।
स्थानहीनस्तथा राजा गम्यः स्यात्सर्वजन्तुषु ॥ ४७ ॥
निजस्थानस्थितोऽप्येकः शतं योद्धुं सहेन्नरः ।
शक्तानामपि शत्रूणां तस्मात्स्थानं न संत्यजेत् ॥ ४८ ॥
तस्माद् दुर्गं दृढं कृत्वा सुभटासारसंयुतम् ।
प्राकारपरिखायुक्तं शस्त्रादिभिरलंकृतम् ॥ ४९ ॥
तिष्ठ मध्यगतो नित्यं युद्धाय कृतनिश्चयः ।
जीवन्संप्राप्स्यसि क्ष्मान्तं मृतो वा स्वर्गमेष्यसि ॥ ५० ॥

अन्यच्च—

बलिनापि न बध्यन्ते लघवोऽप्येकसंश्रयाः ।
विपक्षेणापि मरुता यथैकस्थानवीरुधः ॥ ५१ ॥
महानप्येकजो वृक्षो बलवान्सुप्रतिष्ठितः ।
प्रसह्य इव वातेन शक्या धर्षयितुं यतः ॥ ५२ ॥
अथ ये संहता वृक्षाः सर्वतः सुप्रतिष्ठिताः
न ते शीघ्रेण वातेन हन्यन्ते ह्येकसंश्रयात् ॥ ५३ ॥
एवं मनुष्यमेकं च शौर्येणापि समन्वितम् ।
शक्यं द्विषन्तो मन्यन्ते हिंसन्ति च ततः परम्' ॥ ५४ ॥

एवं प्रजीविमन्त्रः । इदमासनसंज्ञकम् ।

एतत्समाकर्ण्य चिरंजीविनं प्राह—'भद्र, त्वमपि स्वाभिप्रायं वद' । सोऽब्रवीत्—'देव, [1]षाड्गुण्यमध्ये मम [2]संश्रयः सम्यक् प्रतिभाति तत्तस्यानुष्ठानं कार्यम् । उक्तं च—

असहायः समर्थोऽपि तेजस्वी किं करिष्यति ।
निर्वाते ज्वलितो वह्निः स्वयमेव प्रशाम्यति ॥ ५५ ॥

---

१ सन्धि-विग्रह-यान-आसन-द्वैधीभाव-समाश्रयमध्ये ।

(२) संश्रयः—अन्यस्य कस्यचन बलवतो धार्मिकस्य च राज्ञः समाश्रयणम् ।

सङ्गतिः श्रेयसी पुंसां स्वपक्षे च विशेषतः ।
तुषैरपि परिभ्रष्टा न प्ररोहन्ति तण्डुलाः ॥ ५६ ॥

तदत्रैव स्थितेन त्वया कश्चित्समर्थः समाश्रयणीयः, यो विपत्प्रतीकारं करोति । यदि पुनस्त्वं स्वस्थानं त्यक्त्वान्यत्र यास्यसि, तत्कोऽपि ते वाङ्मात्रेणापि सहायत्वं न करिष्यति । उक्तं च—यतः—

वनानि दहतो वह्नेः सखा भवति मारुतः ।
स एव दीपनाशाय कृशे कस्यास्ति सौहृदम् ॥ ५७ ॥

अथवा नैतदेकान्तं[1] यद्बलिनमेकं समाश्रयेत् । लघूनामपि संश्रयो रक्षायै एव भवति । उक्तं च यतः—

संघातवान्यथा वेणुर्निविडो वेणुभिर्वृतः ।
न शक्यः स समुच्छेत्तुं दुर्बलोऽपि तथा नृपः ॥ ५८ ॥

यदि पुनरुत्तमसंश्रयो भवति तत्किमुच्यते । उक्तं च—

महाजनस्य संपर्कः कस्य नोन्नतिकारकः ।
पद्मपत्रस्थितं तोयं धत्त मुक्ताफलश्रियम् ॥ ५९ ॥

तदेवं संश्रयं विना न कश्चित्प्रतीकारो भवति । तस्मात्संश्रयः कार्य इति मेऽभिप्रायः ।' एवं चिरंजीविमन्त्रः ।

अथैवमभिहिते स मेघवर्णो राजा चिरन्तनं [2]पितृसचिवं दीर्घायुषं सकलनीतिशास्त्रपारंगतं स्थिरजीविनामानं प्रणम्य प्रोवाच—'तात, यदेते मया पृष्टाः सचिवास्तावदत्रस्थितस्यापि तव, तत्परीक्षार्थम् । येन त्वं सकलं श्रुत्वा यदुचितं तन्मे समादिशसि । [3]तद्युक्तं भवति तत्समादेश्यम् ।' स आह—'वत्स'

(१) एकान्तम्—नेदमस्माकमेव मतं हृदं नितरां सुन्दरं वर्तत इत्यर्थः ।

(२) पितृमन्त्रिणं । (३) नीतिशास्त्रयुक्तं वचनं ।

सर्वैरप्येतैर्नीतिशास्त्राश्रयमुक्तं सचिवैः । तदुपयुज्यते स्वकालोचितं सर्वमेव । परमेष [1]द्वैधीभावस्य कालः । उक्तं च—

अविश्वासं सदा तिष्ठेत्संधिना विग्रहेण च ।
द्वैधीभावं समाश्रित्य नैव शत्रौ बलीयसि ॥ ६० ॥

तच्छत्रुं विश्वास्याविश्वस्तैर्लोभं दर्शयद्भिः सुखेनोच्छिद्यते रिपुः ।
उक्तं च—

उच्छेद्यमपि विद्वांसो वर्धयन्त्यरिमेकदा ।
गुडेन वर्धितः श्लेष्मा सुखं वृद्ध्या निपात्यते ॥६१॥

उक्तं च—

स्त्रीणां शत्रोः कुमित्रस्य पण्यस्त्रीणां विशेषतः ।
यो भवेदेकभावेन न स जीवति मानवः ॥ ६२ ॥
कृत्यं देवद्विजातीनामात्मनश्च गुरोस्तथा ।
एकभावेन कर्तव्यं शेषं द्वैधं समाश्रितम् ॥ ६३ ॥
एको भावः सदा शस्तो यतीनां भावितात्मनाम् ।
स्त्रीलुब्धानां न लोकानां विशेषेण महीभृताम् ॥ ६४ ॥

तद्द्वैधीभावं संश्रितस्य तव स्वस्थाने वासो भविष्यति । लोभाश्रयाच्च[2] शत्रुमुच्चाटयिष्यसि । अपरं यदि किंचिच्छिद्रं तस्य पश्यसि तद्गत्वा व्यापादयिष्यसि ।' मेघवर्ण आह—'तात, मया [3]सोऽविदितसंश्रयः । तत्कथं तस्य छिद्रं ज्ञास्यामि ।' स्थिरजीव्याह—'वत्स, न केवलं स्थानम्, छिद्राण्यपि तस्य प्रकटीकरिष्यामि [4]प्रणिधिभिः । उक्तं च—

(१) प्रबलशत्रुद्वयमध्ये काकाक्षिवदतिगुप्तभावेनावस्थानं, "राज्येन सह अहं तवैव" इति उभयत्र केवलं वाचा आत्मानमर्पयन् दुर्गमाश्रित्य स्वाभ्युदयेच्छया अवस्थानमित्यर्थः । (२) लोभपरवशात् । (३) अज्ञातवासः । (४) गुप्तचरैः ।

गावो गन्धेन पश्यन्ति वेदैः पश्यन्ति वै द्विजाः ।
चारैः पश्यन्ति राजानश्चक्षुर्भ्यामितरे जनाः ॥ ६५ ॥

उक्तंचात्र विषये—

यस्तीर्थानि निजेपक्षे परपक्षे विशेषतः ।
गुप्तैश्चारैर्नृपो वेत्ति न स दुर्गतिमाप्नुयात्' ॥ ६६ ॥

मेघवर्ण आह—'तात, कानि [1]तीर्थान्युच्यन्ते कतिसंख्यानि च, कीदृशा गुप्तचराः, तत्सर्वं निवेद्यताम्' इति । स आह—'अत्र विषये भगवता नारदेन युधिष्ठिरः प्रोक्तः । यच्छत्रुपक्षेऽष्टादश तीर्थानि, स्वपक्षे पञ्चदश । त्रिभिस्त्रिभिर्गुप्तचरैस्तानि ज्ञयानि । तैर्ज्ञातैः स्वपक्षः परपक्षश्च वश्यो भवति । उक्तश्च नारदेन युधिष्ठिरं प्रति—

कच्चिदष्टादशान्येष स्वपक्षे दश पञ्च च ।
त्रिभिस्त्रिभिरविज्ञातैर्वेत्सि तीर्थानि चारकैः ॥ ६७ ॥

तीर्थशब्देनायुक्तकर्माभिधीयते[2] । तद्यदि तेषां कुत्सितं भवति तत्स्वामिनोऽभिघाताय भवति । प्रधानं भवति, तद्वृद्धये स्यादिति । तद्यथा-मन्त्री, पुरोहितः, सेनापतिः, युवराजः, [3]दौवारिकः, अन्तर्वेशिकः, प्रशासकः, समाहर्तृ-संनिधातृ-प्रदेष्टृ-ज्ञापकाः, साधनाध्यक्षः, गजाध्यक्षः, कोषाध्यक्षः दुर्गपाल-करपाल-

(१) तीर्थानि मन्त्राद्यष्टादशस्थानानि, उक्तञ्च विश्वप्रकाशे "तीर्थं शास्त्रेऽध्वरे क्षेत्रोपायोपाध्यायमन्त्रिषु । योनौ जलावतारेषु मन्त्राद्यष्टादशस्वपि॥"
२ अयुक्ते असावधाने रिपौ कर्म विनाशचेष्टादिरूपं यस्य सः । ३ दौवारिकः—द्वारपालकः, अन्तर्वेशिकः-अन्तर्वेशे अन्तःपुरे नियुक्तः, अन्तःपुररक्षणार्थं स्थापितः कश्चन पुरुषः, प्रशासकः-प्रकर्षेण शासकः-शासनकर्ता सर्वशासकाध्यक्षः । समाहर्ता-करसंग्रहकर्ता । सन्निधाता—एकत्रीकृतकराणां—सन्निधानकारकः । उपदेष्टा-मार्गोपदेशकः, ज्ञापकः संवादस्य ज्ञापयिता ।

सीमापाल-प्रोत्कटभृत्याः । एषां भेदेन द्राग्रिपुः साध्यते । स्वपक्षे च देवी, जननी, [1]कञ्चुकी, मालिकः, शय्यापालकः, [2]स्पर्शाध्यक्षः, [3]सांवत्सरिकः, भिषक्, जलवाहकः, ताम्बूलवाहकः, आचार्यः, अङ्गरक्षकः, स्थानचिन्तकः, छत्रधरः, विलासिनी । एषां वैरद्वारेण स्वपक्षे विघातः ।

वैद्यवात्सरिकाचार्याः स्वपक्षेऽधिकृताश्चराः ।
यथाहितुण्डिकोन्मत्ताः सर्वं जानन्ति शत्रुषु ॥ ६८ ॥

तथा च—

कृत्याकृत्यविदस्तीर्थेष्वन्तः प्रणिधयः पदम् ।
विदांकुर्वन्तु महतस्तलं विद्विषदम्भसः' ॥ ६९ ॥

एवं मन्त्रिवाक्यमाकर्ण्यात्रान्तरे मेघवर्ण आह—'तात अथ किं निमित्तमेवंविधं प्राणान्तिकं सदैव वायसोलूकानां वैरम् । स आह—'वत्स कदाचिद्धंस-शुक-बक-कोकिल-चातक-उलूक-कपोत-पारावत-विष्किर-प्रभृतयः सर्वेऽपि पक्षिणः समेत्य सोद्वेगं मन्त्रयितुमारब्धाः—'अहो, अस्माकं तावद्वैनतेयो राजा । स च वासुदेवभक्तः । न कामपि चिन्तामस्माकं करोति । तत्किं तेन वृथा स्वामिना, यो लुब्धकपाशैर्नित्यं निबध्यमानानां न रक्षां विधत्ते । उक्तं च—

यो न रक्षति वित्रस्तान्पीड्यमानान्परैः सदा ।
जन्तून् पार्थिवरूपेण स कृतान्तो न संशयः ॥ ७० ॥
यदि न स्यान्नरपतिः सम्यङ् नेता ततः प्रजा ।
अकर्णधारा जलधौ विप्लवेतेह नौरिव ॥ ७१ ॥

(१) "अन्तःपुरचरो वृद्धो विप्रो गुणगणान्वितः । सर्वकार्यार्थकुशलः कञ्चुकीत्यभिधीयते" इति लक्षणलक्षितः कश्चनान्तःपुरवासी पुरुषः ।
(२) नृपतेः स्पर्शेन्द्रियग्राह्यवस्तूनां गन्धद्रव्याणां अधिपतिः ।
(३) मौहूर्तिक, ज्योतिश्शास्त्रवेत्तेत्यर्थः ।

षडिमान् पुरुषो जह्याद्भिन्नां नावमिवार्णवे ।
अप्रवक्तारमाचार्यमनधीयानमृत्विजम् ॥ ७२ ॥
अरक्षितारं राजानं भार्यां चाप्रियवादिनीम् ।
ग्रामकामञ्च गोपालं वनकामं च नापितम् ॥ ७३ ॥

तत्संचिन्त्यान्यः कश्चिद्राजा विहङ्गमानां क्रियताम्' इति ।

अथ तैर्भद्राकारमुलूकमवलोक्य सर्वैरभिहितम्—'यदेष उलूको राजाऽस्माकं भविष्यति । तदानीयन्तां नृपाभिषेकसम्बन्धिनः संभाराः' इति । अथ साधिते विविधतीर्थोदके, प्रगुणीकृतेऽष्टोत्तरशतमूलिकासंघाते, प्रदत्ते सिंहासने, वर्तिते सप्तद्वीपसमुद्रभूधरविचित्रे धरित्रीमण्डले, प्रसारिते व्याघ्रचर्मणि, आपूरितेषु हेमकुम्भेषु, दीपेषु, वाद्येषु च, सज्जीकृतेषु दर्पणादिषु माङ्गल्यवस्तुषु, पठत्सु बन्दिमुख्येषु, वेदोच्चारणपरेषु समुदितमुखेषु ब्राह्मणेषु, गीतपरे युवतीजने, आनीतायामग्रमहिष्यां[1] कृकालिकायाम्, उलूकोऽभिषेकार्थं यावत्सिंहासन उपविशति, तावत्कुतोऽपि वायसः समायातः । सोऽचिन्तयत्—'अहो, किमेष सकलपक्षिसमागमो महोत्सवश्च ? अथ ते दृष्ट्वा मिथः प्रोचुः—'पक्षिणां मध्ये वायसश्चतुरः श्रूयते । उक्तं च—

नराणां नापितो धूर्तः पक्षिणां चैव वायसः ।
दंष्ट्रिणां च शृगालस्तु श्वेतभिक्षुस्तपस्विनाम् ॥ ७४ ॥

तदस्यापि वचनं ग्राह्यम् । उक्तं च—

बहुधा बहुभिः सार्धं चिन्तिताः सुनिरूपिताः ।
कथंचिन्न विलीयन्ते विद्वद्भिश्चिन्तिता नयाः' ॥ ७५ ॥

१ प्रधानमहिष्यां ।

अथ वायसः समेत्य तानाह—'अहो, किं महाजनसमागमोऽयं परममहोत्सवश्च ?', ते प्रोचुः—'भोः, नास्ति कश्चिद्विहङ्गमानां राजा । तदस्योलूकस्य विहङ्गराज्याभिषेको निरूपितस्तिष्ठति समस्तपक्षिभिः । तत्त्वमपि स्वमतं देहि । प्रस्तावे समागतोऽसि । अथासौ काको विहस्याह—'अहो, न युक्तमेतत् , यन्मयूर-हंस-कोकिल-चक्रवाक-शुक-कारण्डव-हारीत-सारसादिषु पक्षिप्रधानेषु विद्यमानेषु दिवान्धस्यास्य [1]करालवक्त्रस्याभिषेकः क्रियते । तन्नैतन्मम मतम् । यतः—

वक्रनासं सुजिह्माक्षं क्रूरमप्रियदर्शनम् ।
अक्रुद्धस्येदृशं वक्त्रं भवेत्क्रुद्धस्य कीदृशम् ॥ ७६ ॥

तथा च—

स्वभावरौद्रमत्युग्रं क्रूरमप्रियवादिनम् ।
उलूकं नृपतिं कृत्वा का नः सिद्धिर्भविष्यति ॥ ७७ ॥

अपरं वैनतेये स्वामिनि स्थिते किमेष दिवान्धः क्रियते राजा । तद्यद्यपि गुणवान्भवति तथाप्येकस्मिन्स्वामिनि स्थिते नान्यो भूपः प्रशस्यते ।

एक एव हितार्थाय तेजस्वी पार्थिवो भुवः ।
युगान्त इव भास्वन्तो बहवोऽत्र विपत्तये ॥ ७८ ॥

गुरूणां नाममात्रेऽपि गृहीते स्वामिसंभवे ।
दुष्टानां पुरतः क्षेमं तत्क्षणादेव जायते ॥ ७९ ॥

तथा च—

व्यपदेशेन महतां सिद्धिः संजायते परा ।
शशिनो व्यपदेशेन वसन्ति शशकाः सुखम्' ॥ ८० ॥

ऊचुः—'कथमेतत् ।' स आह—

---

१ भयङ्करमुखस्य ।

# कथा (१)

कस्मिंश्चिद्वने चतुर्दन्तो नाम महागजो यूथाधिपः प्रतिवसतिस्म । तत्र कदाचिन्महत्यनावृष्टिः सञ्जाता प्रभूतवर्षाणि यावत् । तया तडागह्रदपल्वलसरांसि शोषमुपगतानि । अथ तैः समस्तगजैः स गजराजः प्रोक्तः—'देव, पिपासाकुला गजकलभा मृतप्रायाः, अपरे मृताश्च । तदन्विष्यतां कश्चिज्जलाशयो यत्र जलपानेन स्वस्थतां व्रजन्ति' । ततश्चिरं ध्यात्वा तेनाभिहितम्—'अस्ति महाह्रदो विविक्ते प्रदेशे स्थलमध्यगतः पातालगङ्गाजलेन सदैव पूर्णः । तत्तत्र गम्यताम्' इति । तथानुष्ठिते पञ्चरात्रमुपसर्पद्भिः समासादितस्तैः स ह्रदः । तत्र स्वेच्छया जलमवगाह्यास्त[1]मनवेलायां निष्क्रान्ताः । तस्य च ह्रदस्य समन्ताच्छशकबिला असंख्याः सुकोमलभूमौ तिष्ठन्ति । तेऽपि समस्तैरपि तैर्गजैरितस्ततो भ्रमद्भिः परिभग्नाः । बहवः शशका भग्नपादशिरोग्रीवा विहिताः । केचिन्मृताः, केचिज्जीवशेषा जाताः । अथ गते तस्मिन्गजयूथे शशकाः सोद्वेगा [2]गजपादक्षुण्णसमावासाः केचिद्भग्नपादाः, अन्ये जर्जरितकलेवरा रुधिरप्लुताः, अन्ये हतशिशवो बाष्पपिहितलोचनाः समेत्य मिथो मन्त्रं चक्रुः—'अहो विनष्टा वयम् । नित्यमेवैतद्गजयूथमागमिष्यति यतो नान्यत्र जलमस्ति । तत्सर्वेषां नाशो भविष्यति उक्तं च—

स्पृशन्नपि गजो हन्ति जिघ्रन्नपि भुजंगमः ।
सहन्नपि नृपो हन्ति मानयन्नपि दुर्जनः ॥ ८१ ॥

---

१ सन्ध्यासमये । २ गजानां पादैः चरणैः क्षुण्णाश्चूर्णीकृताः समावासा आश्रया येषां ते ।

तच्चिन्त्यतां कश्चिदुपायः ।' तत्रैकः प्रोवाच—'गम्यतां देशत्यागेन । किमन्यत् । उक्तं च—

त्यजेदेकं कुलस्यार्थे ग्रामस्यार्थे कुलं त्यजेत् ।
ग्रामं जनपदस्यार्थे आत्मार्थे पृथिवीं त्यजेत् ॥ ८२ ॥
क्षेम्यां सस्यप्रदां नित्यं पशुवृद्धिकरीमपि ।
परित्यजेन्नृपो भूमिमात्मार्थमविचारयन् ॥ ८३ ॥
आपदर्थे धनं रक्षेद्दारान्रक्षेद्धनैरपि ।
आत्मानं सततं रक्षेद्दारैरपि धनैरपि' ॥ ८४ ॥

ततश्चान्ये प्रोचुः—'भोः' पितृपैतामहं स्थानं न शक्यते सहसा त्यक्तुम् । तत्क्रियतां तेषां कृते काचिद्वि[1]भीषिका । यत्कथमपि दैवान्न समायान्ति । उक्तं च—

निर्विषेणापि सर्पेण कर्तव्या महती [2]फटा ।
विषं भवतु मा वास्तु फटाटोपो भयंकरः' ॥ ८५ ॥

अथान्ये प्रोचुः—'यद्येवं ततस्तेषां महद्बिभीषिकास्थानमस्ति, येन नागमिष्यन्ति । सा च [3]चतुरदूतायत्ता विभीषिका । तत्र विजयदत्तो नाम राजास्मत्स्वामी शशकश्चन्द्रमण्डले निवसति । तत्प्रेष्यतां कश्चिन्मिथ्यादूतो यूथाधिपसकाशं यच्चन्द्रस्त्वामत्र ह्रद आगच्छन्तं निषेधयति । यतोऽस्मत्परिग्रहोऽस्य समन्ताद्वसति ।' एवमभिहिते श्रद्धेयवचनात्कदापि निवर्तते ।' अथान्ये प्रोचुः—'यद्येवं तदस्ति लम्बकर्णो नाम शशकः । स च वचनरचनाचतुरो दूतकर्मज्ञः । स तत्र प्रेष्यतामिति । उक्तं च—

साकारो निःस्पृहो वाग्मी नानाशास्त्रविचक्षणः ।
परचित्तावगन्ता च राज्ञो दूतः स इष्यते ॥ ८६ ॥

---

१ भयप्रदर्शनम् । २ फणा । ३ चतुरदूतसाध्या इत्यर्थः ।

अन्यच्च—

यो मूर्खं लौल्यसंपन्नं राजद्वारिकमाचरेत् ।
मिथ्यावादं विशेषेण तस्य कार्यं न सिध्यति ॥ ८७ ॥

तदन्विष्यतां यथास्माद्व्यसनादात्मनां सुनिर्मुक्तिः' । अथान्ये प्रोचुः—'अहो' युक्तमेतत् । नान्यः कश्चिदुपायोऽस्माकं जीवितस्य । तत्तथैव क्रियताम् । अथ लम्बकर्णो गजयूथाधिपसमीपे निरूपितो गतश्च । तथानुष्ठिते लम्बकर्णोऽपि गजमार्गमासाद्यागम्यं स्थलमारुह्य तं गजमुवाच—'भो भो दुष्ट गज, किमेवं लीलया निःशङ्कतयात्र चन्द्रह्रद आगच्छसि । तन्नागन्तव्यम् । निवर्त्यताम्' इति । तदाकर्ण्य विस्मितमना गज आह—'भोः, कस्त्वम् ।' स आह—'अहं लम्बकर्णो नाम शशकश्चन्द्रमण्डले वसामि । सांप्रतं भगवता चन्द्रमसा तव पार्श्वे प्रहितो दूतः । जानात्येव भवान्, यथार्थवादिनो दूतस्य न दोषः करणीयः । दूतमुखा हि राजानः सर्व एव । उक्तं च—

उद्यतेष्वपि शस्त्रेषु बन्धुवर्गवधेष्वपि ।
परुषाण्यपि जल्पन्तो वध्या दूता न भूभुजा' ॥ ८८ ॥

तच्छ्रुत्वा स आह—'भोः शशक, तत्कथय भगवतश्चन्द्मसः सन्देशम्, येन सत्वरं क्रियते ।' स आह—'भवतातीतदिवसे यूथेन सहागच्छता प्रभूताः शशका निपातिताः । तत्किं न वेत्ति भवान्, यन्मम परिग्रहोऽयम् । तद्यदि जीवितेन ते प्रयोजनम्, तदा केनापि प्रयोजनेनात्र ह्रदे नागन्तव्यमिति सन्देशः ।' गज आह—'अथ क्व वर्तते भगवान्स्वामी चन्द्रः ।' स आह—'अत्र ह्रदे साम्प्रतं शशकानां भवद्यूथमथितानां हतशेषाणां समाश्वासनाय समायातस्तिष्ठति । अहं पुनस्तवान्तिकं प्रेषितः ।' गज आह—'यद्येवं तद्दर्शय मे तं स्वामिनं येन प्रणम्यान्यत्र गच्छामि ।' शशक आह भोः, आगच्छ मया सहैकाकी येन दर्शयामि ।

तथानुष्ठिते शशको निशासमये तं गजं ह्रदतीरे नीत्वा, जलमध्ये स्थितं चन्द्रबिम्बमदर्शयत् । आह च-'भोः, एष नः स्वामी जलमध्ये [1]समाधिस्थस्तिष्ठति । तन्निभृतं प्रणम्य सत्वरं व्रजेति । नो चेत्समाधिभङ्गाद्भूयोऽपि प्रभूतं कोपं करिष्यति ।' अथ गजोऽपि त्रस्तमनास्तं प्रणम्य पुनर्गमनाय प्रस्थितः । शशकाश्च तद्दिनादारभ्य सपरिवाराः सुखेन स्वेषु स्थानेषु तिष्ठन्ति स्म । अतोऽहं ब्रवीमि—'व्यपदेशेन महताम्' इति ॥ अपि च । क्षुद्रमलसं कापुरुषं व्यसनिनमकृतज्ञं पृष्ठप्रलपनशीलं स्वामित्वेन नाभियोजयेज्जीवितकामः । उक्तं च—

क्षुद्रमर्थपतिं प्राप्य-न्यायान्वेषणतत्परौ ।
उभावपि क्षयं प्राप्तौ पुरा शशकपिञ्जलौ' ॥ ८९ ॥

ते प्रोचुः—'कथमेतत् ।' स आह—

## कथा (२)

'कस्मिंश्चिद्वृक्षे पुराहमवसम् । तत्राधस्तात्कोटरे कपिञ्जलो नाम [2]चटकः प्रतिवसति स्म । अथ सदैवास्तमनवेलायामागतयोर्द्वयोरनेकसुभाषितगोष्ठ्या देवर्षिब्रह्मर्षिपुराणचरितकीर्तनेन च पर्यटनदृष्टानेककौतूहलप्रकथनेन च परमसुखमनुभवतोः कालो व्रजति । अथ कदाचित्कपिञ्जलः प्राणयात्रार्थमन्यैश्चटकैः सहान्यं पक्वशालिप्रायं देशं गतः । ततो यावन्निशासमयेऽपि नायातस्तावदहं सोद्वेगमनास्तद्वियोगदुःखितश्चिन्तितवान्—'अहो, किमद्य कपिञ्जलो नायातः । किं केनापि पाशेन बद्धः । आहोस्वित्केनापि व्यापादितः । सर्वथा यदि कुशली भवति तन्मां विना न तिष्ठति ।' एवं मे चिन्तयतो बहून्यहानि व्यति-

१ ध्यानस्थः । २ "गौरा" इति नाम्ना प्रसिद्धः कश्चन पक्षी ।

क्रान्तानि । ततश्च तत्र कोटरे कदाचिच्छीघ्रगो नाम शशकोऽस्तमनवेलायामागत्य प्रविष्टः मयापि कपिञ्जलनिराशत्वेन न निवारितः । अथान्यस्मिन्नहनि कपिञ्जलः शालिभक्षणादतीव पीवरतनुः स्वमाश्रयं स्मृत्वा भूयोऽपि तत्रैव समायातः । अथवा साध्विदमुच्यते—

न तादृग्जायते सौख्यमपि स्वर्गे शरीरिणाम् ।
दारिद्र्येऽपि हि यादृक्स्यात्स्वदेशे स्वपुरे गृहे ॥ ९० ॥

अथासौ [1]कोटरान्तर्गतं शशकं दृष्ट्वा [2]साक्षेपमाह—'भोः शशक, न त्वया सुन्दरं कृतं यन्ममावसथस्थाने[3] प्रविष्टोऽसि । तच्छीघ्रं निष्क्रम्यताम् ।' शशक आह—'न तवेदं गृहम् । किंतु ममैव, तत्किं मिथ्या परुषाणि जल्पसि । उक्तं च—

वापीकूपतडागानां देवालयकुजन्मनाम् ।
उत्सर्गात्परतः स्वाम्यमपि कर्तुं न शक्यते ॥ ९१ ॥

तथा च—

प्रत्यक्षं यस्य यद्भुक्तं क्षेत्राद्यं दश वत्सरान् ।
तत्र भुक्तिः प्रमाणं स्यान्न साक्षी नाक्षराणि वा ॥ ९२ ॥
मानुषाणामयं न्यायो मुनिभिः परिकीर्तितः ।
तिरश्चां च विहङ्गानां यावदेव समाश्रयः ॥ ९३ ॥

तन्ममैतद् गृहम्, न तव' इति । कपिञ्जल आह—'भोः, यदि स्मृतिं प्रमाणीकरोषि तदागच्छ मया सह, येन स्मृतिपाठकं[4] पृष्ट्वा स यस्य ददाति स गृह्णातु' । तथानुष्ठिते मयापि चिन्तितम्—'किमत्र भविष्यति । मया द्रष्टव्योऽयं न्यायः ।' ततः

१ कोटरान्तरगतं-वृक्षरन्ध्रमध्यस्थितमित्यर्थः । २ तिरस्कारसहितम् । ३ वासस्थाने इत्यर्थः । ४ धर्मशास्त्राध्येतारं "स्मृतिस्तु धर्मसंहिता समाहृतिस्तु संग्रहः" इत्यमरः ।

कौतुकादहमपि [1]तावनु प्रस्थितः । अत्रान्तरे तीक्ष्णदंष्ट्रो नामारण्यमार्जारस्तयोर्विवादं श्रुत्वा मार्गासन्नं नदीतटमासाद्य [2]कृतकुशोपग्रहो निमीलितनयन ऊर्ध्वबाहुरर्धपादस्पृष्टभूमिः श्रीसूर्याभिमुख इमां [3]धर्मोपदेशनामकरोत्—'अहो, असारोऽयं संसारः । क्षणभङ्गुराः प्राणाः । स्वप्नसदृशः प्रियसमागमः । इन्द्रजालवत्कुटुम्बपरिग्रहोऽयम् । तद्धर्मं मुक्त्वा नान्या गतिरस्ति । उक्तं च—

अनित्यानि शरीराणि विभवो नैव शाश्वतः ।
नित्यं संनिहितो मृत्युः कर्तव्यो धर्मसंग्रहः ॥ ९४ ॥
यस्य धर्मविहीनानि दिनान्यायान्ति यान्ति च ।
स लोहकारभस्त्रेव श्वसन्नपि न जीवति ॥ ९५ ॥
नाच्छादयति कौपीनं न दंशमशकापहम् ।
शुनः पुच्छमिव व्यर्थं पाण्डित्यं धर्मवर्जितम् ॥ ९६ ॥

अन्यच्च—

पुलाका इव धान्येषु पूतिका इव पक्षिषु ।
मशका इव मर्त्येषु येषां धर्मो न कारणम् ॥ ९७ ॥
श्रेयः पुष्पं फलं वृक्षाद्दध्नः श्रेयो घृतं स्मृतम् ।
श्रेयस्तैलं च पिण्याकाच्छ्रेयान्धर्मस्तु मानुषात् ॥ ९८ ॥
सृष्टा मूत्रपुरीषार्थमाहाराय च केवलम् ।
धर्महीनाः परार्थाय पुरुषाः पशवो यथा ॥ ९९ ॥
स्थैर्यं सर्वेषु कृत्येषु शंसन्ति नयपण्डिताः ।
बह्वन्तराययुक्तस्य धर्मस्य त्वरिता गतिः ॥ १०० ॥
संक्षेपात्कथ्यते धर्मो जनाः किं विस्तरेण वः ।
परोपकारः पुण्याय पापाय परपीडनम् ॥ १०१ ॥

१ तयोः पश्चात् । २ कृतः कुशस्य उपग्रहः ग्रहणं येन तथाभूतः । ३ धर्मशास्त्रालापम् ।

श्रूयतां धर्मसर्वस्वं श्रुत्वा चैवावधार्यताम् ।
आत्मनः प्रतिकूलानि परेषां न समाचरेत्' ॥ १०२ ॥

अथ तस्य तां धर्मोपदेशनां श्रुत्वा शशक आह—भो भोः कपिञ्जल ! एष नदीतीरे तपस्वी धर्मवादी तिष्ठति । तदेनं पृच्छावः ।' कपिञ्जल आह—'ननु स्वभावतोऽस्माकं शत्रुभूतोऽयमस्ति तद् दूरे स्थितौ पृच्छावः । कदाचिदस्य [1]व्रतवैकल्यं संपद्येत । ततो दूरस्थितावूचतुः—'भो भोस्तपस्विन्धर्मोपदेशक, आवयोर्विवादो वर्तते । तद्धर्मशास्त्रद्वारेणास्माकं निर्णयं कुरु । यो हीनवादी स ते भक्ष्यः' इति । स आह—'भद्रौ, मा मेवं वदतम् । निवृत्तोऽहं [2]नरकपातकमार्गात् । अहिंसैव धर्ममार्गः । उक्तं च—

अहिंसापूर्वको धर्मो यस्मात्सद्भिरुदाहृतः ।
यूकमत्कुणदंशादींस्तस्मात्तानपि रक्षयेत् ॥ १०३ ॥
हिंसकान्यपि भूतानि यो हिंसति स निर्घृणः ।
स याति नरकं घोरं किं पुनर्यः शुभानि च ॥ १०४ ॥

एतेऽपि ये याज्ञिका यज्ञकर्मणि पशून्व्यापादयन्ति, ते मूर्खाः [3]परमार्थं श्रुतेर्न जानन्ति । तत्र किलैतदुक्तमजैर्यष्टव्यम्[4] । अजा व्रीहयस्तावत्सप्तवार्षिकाः कथ्यन्ते । न पुनः पशुविशेषाः । उक्तं च—

वृक्षांश्छित्त्वा पशून्हत्वा कृत्वा रुधिरकर्दमम् ।
यद्येवं गम्यते स्वर्गे नरकं केन गम्यते ॥ १०५ ॥

१ व्रतवैकल्यं-व्रतभङ्गः । २ नरकपातकमार्गात्-नरके पातयतीति नरकपातकः, एवम्भूतो यः मार्गस्तस्मात् । ३ सत्यार्थम् । ४ "अजैः यष्टव्यम्" अत्र "अज" शब्देन सप्तवार्षिका व्रीहयः (धान्यानि) गृहीताः। वर्षसप्तकस्य पुराणानि धान्यानीत्यर्थः ।

तन्नाहं भक्षयिष्यामि । परं जयपराजयनिर्णयं करिष्यामि । किन्त्वहं वृद्धो दूराद्युवयोर्भाषान्तरं[1] सम्यङ् न शृणोमि । एवं ज्ञात्वा मम समीपवर्तिनौ भूत्वा ममाग्रे [2]न्याय्यं वदतम् । येन विज्ञाय [3]विवादपरमार्थं, वचो वदतो मे परलोकबाधो न भवति । उक्तं च यतः—

मानाद्वा यदि वा लोभात्क्रोधाद्वा यदि वा भयात् ।
यो न्यायमन्यथा ब्रूते स याति नरकं नरः ॥ १०६ ॥
पञ्च पश्वनृते हन्ति दश हन्ति गवानृते ।
शतं कन्यानृते हन्ति सहस्रं पुरुषानृते ॥ १०७ ॥
उपविष्टः सभामध्ये यो न वक्ति स्फुटं वचः ।
तस्माद् दूरेण स त्याज्यो न्यायो वा कीर्तयेद्रुतम् ॥ १०८ ॥

तस्माद्विश्रब्धौ[4]मम कर्णोपान्तिके स्फुटं निवेदयतम् ।' किं बहुना तेन [5]क्षुद्रेण तथा तौ तूर्णं विश्वासितौ यथा तस्योत्संगवर्तिनौ संजातौ । ततश्च तेनापि समकालमेवैकः पादान्तेनाक्रान्तः, अन्यो दंष्ट्राक्रकचेन[6] च । ततो गतप्राणौ भक्षिताविति । अतोऽहं ब्रवीमि—'क्षुद्रमर्थपतिं प्राप्य इति । भवन्तोऽप्येनं दिवान्धं क्षुद्रमर्थपतिमासाद्य रात्र्यन्धाः सन्तः शशकपिञ्जलमार्गेण यास्यन्ति । एवं ज्ञात्वा यदुचितं तद्विधेयमतः परम् ।' अथ तस्य तद्वचनमाकर्ण्य 'साध्वनेनाभिहितम्' इत्युक्त्वा 'भूयोऽपि पार्थिवार्थं समेत्य मन्त्रयिष्यामहे' इति ब्रुवाणाः सर्वे पक्षिणो यथाभिमतं जग्मुः । केवलमवशिष्टो भद्रासनोपविष्टो[7]

---

१ भाषान्तरं-वाक्यभेदम् । २ न्याय्यं-युक्तियुक्तं सत्यम् । ३ विवादपरमार्थं विवादे उभयोः परस्परविरुद्धे वचसि परमार्थं कस्य अभियोगः सत्यः कस्य मिथ्येति युक्तिसङ्गतं वचः वचनं वदतो मे परलोकबाधः-स्वर्गप्रतिबन्धः । ४ शंकारहितौ । ५ नीचेन । ६ दन्तरूपास्त्रविशेषेण । ७ शुभासने आसीनः ।

ऽभिषेकाभिमुखो दिवान्धः कृकालिकया सहास्ते । आह च—'कः कोऽत्र भोः । किमद्यापि न क्रियते ममाभिषेकः ।' इति श्रुत्वा कृकालिकयाभिहितम्—'भद्र, तवाभिषेके कृतोऽयं विघ्नो वायसेन, गताश्च सर्वेऽपि विहगा यथेप्सितासु दिक्षु । केवलमेकोऽयं वायसोऽवशिष्टः केनापि हेतुना तिष्ठति । तत्त्वरितमुत्तिष्ठ येन त्वां स्वाश्रयं प्रापयामि ।' तच्छ्रुत्वा सविषादमुलूको वायसमाह—'भो भो दुष्टात्मन्, किंमया तेऽपकृतम्, यद्राज्याभिषेको मे विघ्नितः । तदद्य प्रभृति सान्वयमावयोर्वैरं संजातम् । उक्तञ्च—

रोहति सायकैर्विद्धं छिन्नं रोहति चासिना ।
वचो दुरुक्तं बीभत्सं न प्ररोहति वाक्क्षतम्' ॥ १०९ ॥

इत्येवमभिधाय कृकालिकया सह स्वाश्रयं गतः । अथ भयव्याकुलो वायसो व्यचिन्तयत्—'अहो, अकारणं वैरमासादितम् । मया किमिदं व्याहृतम् । उक्तं च—

अदेशकालज्ञमनायतिक्षमं
यदप्रियं लाघवकारि चात्मनः ।
योऽत्राब्रवीत्कारणवर्जितं वचो
न तद्वचः स्याद्विषमेव तद्वचः ॥ ११० ॥

बलोपपन्नोऽपि हि बुद्धिमान्नरः
परं नयेन्न स्वयमेव वैरिताम् ।
भिषङ्ममास्तीति विचिन्त्य भक्षये-
दकारणात्को हि विचक्षणो विषम् ॥ १११ ॥

परपरिवादः परिषदि न कथंचित्पण्डितेन वक्तव्यः ।
सत्यमपि तन्न वाच्यं यदुक्तमसुखावहं भवति ॥ ११२ ॥

सुहृद्भिराप्तैरसकृद्विचारितं
स्वयं च बुद्ध्या प्रविचारिताश्रयम् ।
करोति कार्यं खलु यः स बुद्धिमा-
न्स एव लक्ष्म्या यशसां च भाजनम्' ॥ ११३ ॥

एवं विचिन्त्य काकोऽपि प्रयातः । तदा प्रभृत्यस्माभिः सह [1]कौशिकानामन्वयगतं वैरमस्ति ।' मेघवर्ण आह—'तात, एवं गतेऽस्माभिः किं कृतमस्ति ।' स आह—'वत्स, एवं गतेऽपि [2]षाड्गुण्यादपरः [3]स्थूलोऽभिप्रायोऽस्ति । [4]तमङ्गीकृत्य स्वयमेवाहं तद्विजयाय यास्यामि । रिपून्वञ्चयित्वा वधिष्यामि । उक्तं च यतः—

बहुबुद्धिसमायुक्ताः सुविज्ञाना बलोत्कटान् ।
शक्ता वञ्चयितुं धूर्ता ब्राह्मणं छागलादिव' ॥ ११४ ॥

मेघवर्ण आह—'कथमेतत् । सोऽब्रवीत्—

## कथा (३)

कस्मिंश्चिदधिष्ठाने मित्रशर्मा नाम ब्राह्मणः [5]कृताग्निहोत्रपरिग्रहः प्रतिवसति स्म । तेन कदाचिन्माघमासे [6]सौम्यानिले प्रवाति, मेघाच्छादिते गगने मन्दं मन्दं प्रवर्षति पर्जन्ये, [7]पशुप्रार्थनाय किंचिद् ग्रामान्तरं गत्वा कश्चिद्यजमानो याचितः—'भो यजमान, आगामिन्याममावास्यायामहं यक्ष्यामि यज्ञम् । तद्देहि मे पशुमेकम् ।' अथ तेन तस्य शास्त्रोक्तः [8]पीवरतनुः

१ उलूकानाम् । २ सन्धि-विग्रहादिषट्कात् । ३ महान् । ४ अवलम्ब्य । ५ कृतः अग्निहोत्रस्य गृहस्थापितेः संस्कृताग्नौ नित्यं होमरूपस्य नियमविशेषस्य परिग्रहः स्वीकारो येन तथाभूतः, अग्निहोत्रीत्यर्थः । ६ मन्दे मरुति । ७ पशुप्रार्थनाय-यज्ञं कर्तुं अजयाञ्चार्थम् । ८ परिपुष्टशरीरः ।

पशुः प्रदत्तः। सोऽपि तं समर्थमितश्चेतश्च गच्छन्तं विज्ञाय स्कन्धे कृत्वा सत्वरं स्वपुराभिमुखः प्रतस्थे। अथ तस्य गच्छतो मार्गे त्रयो धूर्ताः क्षुत्क्षामकण्ठाः संमुखा बभूवुः। तैश्च तादृशं पीवरतनुं स्कन्ध आरूढमवलोक्य मिथोऽभिहितम्—'अहो अस्य पशोर्भक्षणादद्यतनीयो[1] हिमपातो[2] व्यर्थतां नीयते। तदेनं वञ्चयित्वा पशुमादाय शीतत्राणं कुर्मः। अथ तेषामेकतमो वेषपरिवर्तनं विधाय संमुखो भूत्वापमार्गेण[3] [4]तमाहिताग्निमूचे—'भो भो [5]बालाग्निहोत्रिन्, किमेवं जनविरुद्धं हास्यकार्यमनुष्ठीयते। यदेष सारमेयोऽपवित्रः स्कन्धाधिरूढो नीयते। उक्तं च यतः—

श्वानकुक्कुटचाण्डालाः समस्पर्शाः प्रकीर्तिताः।
रासभोष्ट्रौ विशेषेण तस्मात्तान्नैव संस्पृशेत्' ॥ ११५ ॥

ततश्च तेन कोपाभिभूतेनाभिहितम्—'अहो' किमन्धो भवान्। यत्पशुं सारमेयं प्रतिपादयसि।' सोऽब्रवीत्—'ब्रह्मन्, कोपस्त्वया न कार्यः। यथेच्छं गम्यताम्' इति। अथ यावत्किंचिदध्वनोऽन्तरं गच्छति, तावद् द्वितीयो धूर्तः संमुखे समुपेत्य तमुवाच—'भो ब्रह्मन्, कष्टं कष्टम्। यद्यपि वल्लभोऽयं ते मृतवत्सः, तथापि स्कन्धमारोपयितुमयुक्तम्। उक्तं च यतः—

तिर्यञ्चं मानुषं वापि यो मृतं संस्पृशेत्कुधीः।
पञ्चगव्येन शुद्धिः स्यात्तस्य चान्द्रायणेन वा' ॥ ११६ ॥

---

१ अद्यभवः। २ शीतागमः। ३ अपमार्गेण येन मार्गेण ब्राह्मणः समायाति ततो भिन्नमार्गेण। ४ अग्निहोतृणम्। ५ बालश्चासौ अग्निहोत्रीति तत्सम्बुद्धौ बालाग्निहोत्रिन् शिशुत्वादज्ञाताग्निहोत्रनियमेत्यर्थः। अन्यथा कथं शृगालेन अग्निहोत्रं कर्तुम् अभिलपसि?

अथासौ सकोपमिदमाह—'भोः' किमन्धो भवान् । यत्पशुं मृतवत्सं वदसि' । सोऽब्रवीत्—'भगवन्, मा कोपं कुरु । अज्ञानान्मयाभिहितम् । तत्त्वमात्मरुचिं समाचर' इति । अथ यावत्स्तोकं वनान्तरं गच्छति तावत्तृतीयोऽन्यवेषधारी धूर्तः संमुखः समुपेत्य तमुवाच—'भोः' अयुक्तमेतत् । यत्त्वं रासभं स्कन्धाधिरूढं नयसि । तत्त्यज्यतामेषः । उक्तं च—

यः स्पृशेद्रासभं मर्त्यो ज्ञानादज्ञानतोऽपि वा ।
सचैलं स्नानमुद्दिष्टं तस्य पापप्रशान्तये ॥ ११७ ॥

तत्त्यजैनं यावदन्यः कश्चिन्न पश्यति' । अथासौ तं पशुं रासभं मन्यमानो भयाद्भूमौ प्रक्षिप्य स्वगृहमुद्दिश्य प्रपलायितः । ततस्ते त्रयो मिलित्वा तं पशुमादाय यथेच्छया भक्षितुमारब्धाः । अतोऽहं ब्रवीमि—'बहुबुद्धिसमायुक्ताः' इति । अथवा साध्विदमुच्यते—

अभिनवसेवकविनयैः प्राघुणिकोक्तैर्विलासिनीरुदितैः ।
धूर्तजनवचननिकरैरिह कश्चिदवञ्चितो नास्ति ॥ ११८ ॥

किंच दुर्बलैरपि बहुभिः सह विरोधो न युक्तः । उक्तं च—

बहवो न विरोद्धव्या दुर्जया हि महाजनाः ।
स्फुरन्तमपि नागेन्द्रं भक्षयन्ति पिपीलिकाः' ॥ ११९ ॥

मेघवर्ण आह—'कथमेतत् ।' स्थिरजीवी कथयति—

## कथा (४)

अस्ति कस्मिंश्चिद्वल्मीके महाकायः कृष्णसर्पोऽतिदर्पो नाम । स कदाचिद्बिलानुसारिमार्गमुत्सृज्यान्येन लघुद्वारेण निष्क्रमितुमारब्धः । निष्क्रामतश्च तस्य महाकायत्वाद्दैववशतया लघुवि-

वरत्वाच्च शरीरे व्रणः समुत्पन्नः । अथ[1] व्रणशोणितगन्धानुसारिणीभिः पिपीलिकाभिः सर्वतो व्याप्तो व्याकुलीकृतश्च । कति व्यापादयति, कति वा ताडयति । अथ प्रभूतत्वाद्विस्तारितबहुव्रणः क्षतसर्वाङ्गोऽतिदर्पः पञ्चत्वमुपागतः । अतोऽहं ब्रवीमि—'बहवो न विरोद्धव्याः' इति तदत्रास्ति किंचिन्मे वक्तव्यमेव । तदवधार्य यथोक्तमनुष्ठीयताम् ।' मेघवर्ण आह—'तत्समादेशय । तवादेशो नान्यथा कर्तव्यः ।' स्थिरजीवी प्राह—'वत्स, समाकर्णय तर्हि सामादीनतिक्रम्य यो मया पञ्चम उपायो निरूपितः, तन्मां विपक्षभूतं कृत्वातिनिष्ठुरवचनैर्निर्भर्त्स्य, यथा विपक्षप्रणिधीनां प्रत्ययो भवति तथा समाहृतरुधिरैरालिप्यास्यैव न्यग्रोधस्याधस्तात्प्रक्षिप्य मां गम्यतां पर्वतमृष्यमूकं प्रति । तत्र सपरिवारस्तिष्ठ, यावदहं समस्तान्सपत्नान्सुप्रणीतेन विधिना विश्वास्याभिमुखान्कृत्वा कृतार्थो ज्ञातदुर्गमध्यो दिवसे तानन्धतां प्राप्तान् ज्ञात्वा व्यापादयामि । ज्ञातं मया सम्यक् । नान्यथास्माकं सिद्धिरिति । यतो[2]दुर्गमेतदपसाररहितं[3] केवलं वधाय भविष्यति । उक्तं च यतः—

अपसारसमायुक्तं नयज्ञैर्दुर्गमुच्यते ।
अपसारपरित्यक्तं दुर्गव्याजेन बन्धनम् ॥ १२० ॥

न च त्वया मदर्थं कृपा कार्या । उक्तं च—

अपि प्राणसमानिष्टान्पालितांल्लालितानपि ।
भृत्यान्युद्धे समुत्पन्ने पश्येच्छुष्कमिवेन्धनम् ॥ १२१ ॥

तथा च—

प्राणवद्रक्षयेद्भृत्यान्स्वकायमिव पोषयेत् ।
सदैकदिवसस्यार्थे यत्र स्याद्रिपुसंगमः ॥ १२२ ॥

---

१ व्रणनिःसृतरक्तगन्धानुगामिनीभिः । २ अस्माकं वासः ।
३ अपसाररहितं-पलायनस्य उपायेन शून्यमित्यर्थः ।

तत्त्वयाहं नात्रविषये प्रतिषेधनीयः ।' इत्युक्त्वा तेन सह शुष्ककलहं कर्तुमारब्धः । अथान्ये अस्य भृत्याः स्थिरजीविन-मुच्छृङ्खलवचनैर्जल्पन्तमवलोक्य तस्य वधायोद्यता मेघवर्णेना-भिहिताः—'अहो, निवर्तध्वं यूयम् । अहमेवास्य शत्रुपक्ष-पातिनो दुरात्मनः स्वयं निग्रहं करिष्यामि ।' इत्यभिधाय तस्योपरि समारुह्य, लघुभिश्चञ्चुप्रहारैस्तं प्रहृत्य, आहतरुधिरेण प्लावयित्वा, तदुपदिष्टमृष्यमूकपर्वतं सपरिवारो गतः । एतस्मिन्नन्तरे कृकालिकया [1]द्विषत्प्रणिधीभूतया तत्सर्वं मेघ-वर्णस्यामात्यस्य व्यसनमुलूकराजस्य निवेदितम् 'यत्तवारिः संप्रति भीतः क्वचित्प्रचलितः सपरिवारः' इति । अथोलूकाधि-पस्तदाकर्ण्यास्तमनवेलायां सामात्यः सपरिजनो वायसवधार्थं प्रचलितः । प्राह च—'त्वर्यतां त्वर्यताम् । भीतः शत्रुः पलायन-परः पुण्यैर्लभ्यते । उक्तं च—

शत्रोः प्रचलने छिद्रमेकमन्यच्च संश्रयम् ।
कुर्वाणो जायते वश्यो व्यग्रत्वे राजसेविनाम् ॥ १२३ ॥

एवं ब्रुवाणः समन्ताद्न्यग्रोधपादपमधः परिवेष्ट्य व्यव-स्थितः । यावन्न कश्चिद्वायसो दृश्यते, तावच्छाखाग्रमधिरूढो हृष्टमना वन्दिभिरभिष्टूयमानोऽरिमर्दनस्तान्परिजनान्प्रोवाच—'अहो, ज्ञायतां तेषां मार्गः । कतमेन मार्गेण [2]प्रनष्टाः काकाः । तद्यावन्न दुर्गं समाश्रयन्ति, तावदेव पृष्ठतो गत्वा व्यापाद-यामि । उक्तं च—

वृतिमप्याश्रितः शत्रुरवध्यः स्याज्जिगीषुणा ।
किं पुनः संश्रितो दुर्गं सामग्र्या परया युतम्' ॥ १२४ ॥

---

१ शत्रुपक्षीयगुप्तचरकर्मणि नियुक्तया । २ पलायिताः ।

अथैतस्मिन्प्रस्तावे स्थिरजीवी चिन्तयामास—'यदेतेऽस्मच्छन्नवोऽनुपलब्धास्मद्वृत्तान्ता[१] यथागतमेव यान्ति । ततो मया न किंचित्कृतं भवति । उक्तं च—

अनारम्भो हि कार्याणां प्रथमं बुद्धिलक्षणम् ।
प्रारब्धस्यान्तगमनं द्वितीयं बुद्धिलक्षणम् ॥ १२५ ॥

तद्वरमनारम्भः; न चारम्भविघातः । तदहमेताञ्शब्दं संश्राव्यात्मानं दर्शयामि' इति विचार्य मन्दं मन्दं शब्दमकरोत् । तच्छ्रुत्वा ते सकला अप्युलूकास्तद्वधाय जग्मुः । अथ तेनोक्तं—'अहो, अहं स्थिरजीवी नाम मेघवर्णस्य मन्त्री । मेघवर्णेनैवेदृशीमवस्थां नीतः । तन्निवेदयतात्मस्वाम्यग्रे । तेन सह बहु वक्तव्यमस्ति ।' अथ तैर्निवेदितः स उलूकराजो विस्मयाविष्टस्तत्क्षणात्तस्य सकाशं गत्वा प्रोवाच—'भो भोः, किमेतां दशां गतस्त्वम् । तत्कथ्यताम् ।' स्थिरजीवी प्राह—'देव, श्रूयतां तदवस्थाकारणम् । अतीतदिने स दुरात्मा मेघवर्णो युष्मद्व्यापादितप्रभूतवायसानां पीडया युष्माकमुपरि कोपशोकग्रस्तो युद्धार्थं प्रचलित आसीत् । ततो मयाभिहितम्—'स्वामिन्, न युक्तं भवतस्तदुपरि गन्तुम् । बलवन्त एते, बलहीनाश्च वयम् ।

उक्तं च—

बलीयसा हीनबलो विरोधं
न भूतिकामो मनसापि वाञ्छेत् ।
न वध्यतेऽत्यन्तबलो हि यस्माद्
व्यक्तं प्रणाशोऽस्ति पतङ्गवृत्तेः ॥ १२६ ॥

तत्तस्योपायनप्रदानेन संधिरेव युक्तः । उक्तं च—

१ अनुपलब्धः न परिज्ञातः अस्माकं वृत्तान्तः यैस्ते ।

बलवन्तं रिपुं दृष्ट्वा सर्वस्वमपि बुद्धिमान् ।
दत्त्वा हि रक्षयेत्प्राणान्रक्षितैस्तैर्धनं पुनः' ॥ १२७ ॥

तच्छ्रुत्वा तेन दुर्जनप्रकोपितेन त्वत्पक्षपातिनं मामाशङ्कमानेनेमां दशां नीतः । तत्तव पादौ सांप्रतं मे शरणम् । किं बहुना विज्ञप्तेन । यावदहं प्रचलितुं शक्नोमि, तावत्त्वां तस्यावासे नीत्वा सर्ववायसक्षयं विधास्यामि' इति ।

अथारिमर्दनस्तदाकर्ण्य पितृपितामहक्रमागतमन्त्रिभिः सार्धं मन्त्रयाञ्चक्रे । तस्य च पञ्च मन्त्रिणः । तद्यथा—रक्ताक्षः क्रूराक्षः, दीप्ताक्षः, वक्रनाशः, प्राकारकर्णश्चेति । तत्रादौ रक्ताक्षमपृच्छत्—'भद्र, एष तावत्तस्य रिपोर्मन्त्री मम हस्तगतः । तत्किं क्रियताम्' इति । रक्ताक्ष आह—'देव, किमत्र चिन्त्यते । अविचारितमयं हन्तव्यः । यतः—

हीनः शत्रुर्निहन्तव्यो यावन्न बलवान्भवेत् ।
प्राप्तस्वपौरुषबलः पश्चाद्भवति दुर्जयः ॥ १२८ ॥

किं च स्वयमुपागताः श्रीस्त्यज्यमाना शपतीति लोके [1]प्रवादः । उक्तं च—

कालो हि सकृदभ्येति यन्नरं कालकाङ्क्षिणम् ।
दुर्लभः स पुनस्तेन कालकर्माचिकीर्षता ॥ १२९ ॥

श्रूयते च यथा—

चितिकां दीपितां पश्य फटां भग्नां ममैव च ।
भिन्नश्लिष्टा तु या प्रीतिर्न सा स्नेहेन वर्धते' ॥ १३० ॥

अरिमर्दनः प्राह—'कथमेतत् ।' रक्ताक्षः कथयति—

१ प्रसिद्धिः ।

# कथा (५)

अस्ति कस्मिंश्चिदधिष्ठाने हरिदत्तो नाम ब्राह्मणः । तस्य च कृषिं कुर्वतः सदैव [1]निष्फलः कालोऽतिवर्तते[2] । अथैकस्मिन्दिवसे स ब्राह्मण उष्णकालावसाने घर्मार्तः स्वक्षेत्रमध्ये वृक्षच्छायायां प्रसुप्तोऽनतिदूरे वल्मीकोपरि प्रसारितं बृहत्फटायुक्तं भीषणं भुजङ्गमं दृष्ट्वा चिन्तयामास—'नूनमेषा क्षेत्रदेवता मया कदाचिदपि न पूजिता । तेनेदं मे कृषिकर्म विफलीभवति । तदस्या अहं पूजामद्य करिष्यामि ।' इत्यवधार्य कुतोऽपि क्षीरं याचित्वा शरावे निक्षिप्य वल्मीकान्तिकमुपागम्योवाच—'भोः क्षेत्रपाल, मयैतावन्तं कालं न ज्ञातं यत्त्वमत्र वससि । तेन पूजा न कृता । तत्सांप्रतं क्षमस्व' इति । एवमुक्त्वा दुग्धं च निवेद्य गृहाभिमुखं प्रायात् । अथ प्रातर्यावदागत्य पश्यति, [3]तावद्दीनारमेकं शरावे दृष्टवान् । एवं च प्रतिदिनमेकाकी समागत्य तस्मै क्षीरं ददाति । एकैकं च दीनारं गृह्णाति । अथैकस्मिन्दिवसे वल्मीके क्षीरनयनाय पुत्रं [4]निरूप्य ब्राह्मणो ग्रामान्तरं जगाम । पुत्रोऽपि क्षीरं तत्र नीत्वा संस्थाप्य च पुनर्गृहं समायातः । दिनान्तरे तत्र गत्वा दीनारमेकं च दृष्ट्वा गृहीत्वा च चिन्तितवान्—नूनं सौवर्णदीनारपूर्णो वल्मीकः । तदेनं हत्वा सर्वमेकवारं ग्रहीष्यामि ।' इत्येवं संप्रधार्यान्येद्युः क्षीरं ददता ब्राह्मणपुत्रेण सर्पो लगुडेन शिरसि ताडितः । ततः कथमपि दैववशादमुक्तजीवित एव रोषात्तमेव तीव्रविषदशनैस्तथाऽदशत्, यथा स सद्यः पञ्चत्वमुपागतः । स्वजनैश्च नातिदूरे क्षेत्रस्य काष्ठसंचयैः संस्कृतः । अथ द्वितीयदिने तस्य पिता समायातः । स्वजनेभ्यः सुतविनाशकारणं श्रुत्वा तथैव समर्थितवान् । अब्रवीच्च—

१ लाभाभावादित्यर्थः । २ अतिक्रामति । ३ स्वर्णमुद्राभेदम् । ४नियुज्य ।

'भूतान्यो नानुगृह्णाति ह्यात्मनः शरणागतान् ।
भूतार्थास्तस्य नश्यन्ति हंसाः पद्मवने यथा' ॥ १३१ ॥

पुरुषैरुक्तम्—'कथमेतत् ।' ब्राह्मणः कथयति—

## कथा ( ६ )

अस्ति कस्मिंश्चिदधिष्ठाने चित्ररथो नाम राजा । तस्य योधैः सुरक्ष्यमाणं पद्मसरो नाम सरस्तिष्ठति । तत्र च प्रभूता जाम्बूनदमया[1] हंसास्तिष्ठन्ति । षण्मासे पिच्छमेकैकं परित्यजन्ति । अथ तत्र सरसि सौवर्णो बृहत्पक्षी समायातः । तैश्चोक्तः—'अस्माकं मध्ये त्वया न वस्तव्यम्, येन कारणेनास्माभिः षण्मासान्ते पिच्छैकैकदानं कृत्वा गृहीतमेतत्सरः ।' एवं च किं बहुना परस्परं द्वैधमुत्पन्नम् । स च राज्ञः शरणं गतोऽब्रवीत्—'देव, एते पक्षिण एवं वदन्ति, यदस्माकं राजा किं करिष्यति । न कस्याप्यावासं दद्मः' । मया चोक्तम्—' न शोभनं युष्माभिरभिहितम् । अहं गत्वा राज्ञे निवेदयिष्यामि । एवं स्थिते देवः प्रमाणम् ।' ततो राजा भृत्यानब्रवीत्—'भो भोः, गच्छत । सर्वान्पक्षिणो गतासून्कृत्वा शीघ्रमानयत ।' राजादेशानन्तरमेव प्रचेलुस्ते । अथ लगुडहस्तान्राजपुरुषान्दृष्ट्वा तत्रैकेन पक्षिणा वृद्धेनोक्तम्—'भोः स्वजनाः, न शोभनमापतितम् । ततः सर्वैरेकमतीभूय शीघ्रमुत्पतितव्यम्'[2] । तैश्च तथानुष्ठितम् । अतोऽहं ब्रवीमि—भूतान्यो नानुगृह्णाति' इति । इत्युक्त्वा पुनरपि ब्राह्मणः प्रत्यूषे क्षीरं गृहीत्वा तत्र गत्वा तारस्वरेण सर्पमस्तौत् । तदा सर्पश्चिरं वल्मीकद्वारान्तर्लीन एव ब्राह्मणं प्रत्युवाच—'त्वं लोभादत्रागतः पुत्रशोकमपि विहाय । अतः परं तव

१ जाम्बूनदमयाः-हिरण्मयाः । २ उड्डयनीयम् ।

मम च प्रीतिर्नोचिता । तव पुत्रेण यौवनोन्मदेनाहं ताडितः । मया स दष्टः । कथं मया लगुडप्रहारो विस्मर्तव्यः, त्वया च पुत्रशोकदुःखं कथं विस्मर्तव्यम्' इत्युक्त्वा बहुमूल्यं हीरकमणिं तस्मै दत्त्वा 'अतः परं पुनस्त्वया नागन्तव्यम्' इति पुनरुक्त्वा विवरान्तर्गतः । ब्राह्मणश्च मणिं गृहीत्वा पुत्रबुद्धिं निन्दन्स्वगृहमागतः । अतोऽहं ब्रवीमि—'चितिकां दीपिकां पश्य' इति । तदस्मिन्हतेऽयत्नादेव राज्यमकण्टकं भवतो भवति ।' तस्यैतद्वचनं श्रुत्वा क्रूराक्षं पप्रच्छ—'भद्र, त्वं तु किं मन्यसे ।' सोऽब्रवीत्—'देव, निर्दयमेतत् यदनेनाभिहितम् । यत्कारणं शरणागतो न वध्यते । सुष्ठु खल्विदमाख्यातम् ।

श्रूयते हि कपोतेन शत्रुः शरणमागतः ।
पूजितश्च यथान्यायं स्वैश्च मांसैर्निमन्त्रितः' ॥ १३२ ॥

अरिमर्दनोऽब्रवीत्-'कथमेतत् ।' क्रूराक्षः कथयति—

## कथा (७)

'कश्चित्क्षुद्रसमाचारः प्राणिनां कालसन्निभः ।
विचचार महारण्ये घोरः शकुनिलुब्धकः ॥ १३३ ॥
नैव कश्चित्सुहृत्तस्य न सम्बन्धी न बान्धवः ।
स तैः सर्वैः परित्यक्तस्तेन रौद्रेण कर्मणा ॥ १३४ ॥

अथवा—

ये नृशंसा दुरात्मानः प्राणिनां प्राणनाशकाः ।
उद्वेजनीया भूतानां व्याला इव भवन्ति ते ॥ १३५ ॥
स पञ्जरकमादाय पाशं च लगुडं तथा ।
नित्यमेव वनं याति सर्वप्राणिविहिंसकः ॥ १३६ ॥
अन्येद्युर्भ्रमतस्तस्य वने कापि कपोतिका ।
जाता हस्तगता तां स प्राक्षिपत्पञ्जरान्तरे ॥ १३७ ॥

अथ कृष्णा दिशः सर्वा वनस्थस्याभवन्घनैः ।
वातवृष्टिश्च महती क्षयकाल इवाभवत् ॥ १३८ ॥
ततः स त्रस्तहृदयः कम्पमानो मुहुर्मुहुः ।
अन्वेषयन्परित्राणमाससाद वनस्पतिम् ॥ १३९ ॥
मुहूर्तं पश्यते यावद्वियद्विमलतारकम् ।
प्राप्य वृक्षं वदत्येव योऽत्र तिष्ठति कश्चन ॥ १४० ॥
तस्याहं शरणं प्राप्तः स परित्रातु मामिति ।
शीतेन भिद्यमानं च क्षुधया गतचेतसम् ॥ १४१ ॥
अथ तस्य तरोः स्कन्धे कपोतः सुचिरोषितः ।
भार्याविरहितस्तिष्ठन्विललाप सुदुःखितः ॥ १४२ ॥
वातवर्षो महानासीन्न चागच्छति मे प्रिया ।
तया विरहितं ह्येतच्छून्यमद्य गृहं मम ॥ १४३ ॥
पतिव्रता पतिप्राणा पत्युः प्रियहिते रता ।
यस्य स्यादीदृशी भार्या धन्यः स पुरुषो भुवि ॥ १४४ ॥
न गृहं गृहमित्याहुर्गृहिणी गृहमुच्यते ।
गृहं हि गृहिणीहीनमरण्यसदृशं मतम् ॥ १४५ ॥
पञ्जरस्था ततः श्रुत्वा भर्तुर्दुःखान्वितं वचः ।
कपोतिका सुसंतुष्टा वाक्यं चेदमथाह सा ॥ १४६ ॥
न सा स्त्रीत्यभिमन्तव्या यस्यां भर्ता न तुष्यति ।
तुष्टे भर्तरि नारीणां तुष्टाः स्युः सर्वदेवताः ॥ १४७ ॥
दावाग्निना विदग्धेव सपुष्पस्तबका लता ।
भस्मीभवतु सा नारी यस्यां भर्ता न तुष्यति ॥ १४८ ॥
मितं ददाति हि पिता मितं भ्राता मितं सुतः ।
अमितस्य हि दातारं भर्तारं का न पूजयेत् ॥ १४९ ॥

पुनश्चाब्रवीत्—

शृणुष्वावहितः कान्त ! यत्ते वक्ष्याम्यहं हितम् ।
प्राणैरपि त्वया नित्यं संरक्ष्यः शरणागतः ॥ १५० ॥

एष शाकुनिकः शेते तवावासं समाश्रितः ।
शीतार्तश्च क्षुधार्तश्च पूजामस्मै समाचर ॥ १५१ ॥

श्रूयते च—

यः सायमतिथिं प्राप्तं यथाशक्ति न पूजयेत् ।
तस्यासौ दुष्कृतं दत्वा सुकृतं चापकर्षति ॥ १५२ ॥
मा चास्मै त्वं कृथा द्वेषं बद्धानेनेति मत्प्रिया ।
स्वकृतैरेव बद्धाहं प्राक्तनैः कर्मबन्धनैः ॥ १५३ ॥
दारिद्र्यरोगदुःखानि बन्धनव्यसनानि च ।
आत्मापराधवृक्षस्य फलान्येतानि देहिनाम् ॥ १५४ ॥
तस्मात्त्वं द्वेषमुत्सृज्य मद्बन्धनसमुद्भवम् ।
धर्मे मनः समाधाय पूजयैनं यथाविधि ॥ १५५ ॥
तस्यास्तद्वचनं श्रुत्वा धर्मयुक्तिसमन्वितम् ।
उपगम्य ततोऽधृष्टः कपोतः प्राह लुब्धकम् ॥ १५६ ॥
भद्र सुस्वागतं तेऽस्तु ब्रूहि किं करवाणि ते ।
संतापश्च न कर्तव्यः स्वगृहे वर्तते भवान् ॥ १५७ ॥
तस्य तद्वचनं श्रुत्वा प्रत्युवाच विहङ्गमम् ।
कपोत खलु शीतं मे हिमत्राणं विधीयताम् ॥ १५८ ॥
स गत्वाङ्गारकं नीत्वा पातयामास पावकम् ।
ततः शुष्केषु पर्णेषु तमाशु समदीपयत् ॥ १५९ ॥
सुसन्दीप्तं ततः कृत्वा तमाह शरणागतम् ।
संतापयस्व विश्रब्धं स्वगात्राण्यत्र निर्भयः ॥
न चास्ति विभवः कश्चिन्नाशये येन ते क्षुधम् ॥ १६० ॥
सहस्रं भरते कश्चिच्छतमन्यो दशापरः ।
मम त्वकृतपुण्यस्य क्षुद्रस्यात्मापि दुर्भरः ॥ १६१ ॥
एकस्याप्यतिथेरन्नं यः प्रदातुं न शक्तिमान् ।
तस्यानेकपरिक्लेशे गृहे किं वसतः फलम् ॥ १६२ ॥

तत्तथा साधयास्येतच्छरीरं दुःखजीवितम् ।
यथा भूयो न वक्ष्यामि नास्तीत्यर्थिसमागमे ॥ १६३ ॥
स निनिन्द किलात्मानं न तु तं लुब्धकं पुनः ।
उवाच तर्पयिष्ये त्वां मुहूर्तं प्रतिपालय ॥ १६४ ॥
एवमुक्त्वा स धर्मात्मा प्रहृष्टेनान्तरात्मना ।
तमग्निं संपरिक्रम्य प्रविवेश स्ववेश्मवत् ॥ १६५ ॥
ततस्तं लुब्धको दृष्ट्वा कृपया पीडितो भृशम् ।
कपोतमग्नौ पतितं वाक्यमेतदभाषत ॥ १६६ ॥
यः करोति नरः पापं न तस्यात्मा ध्रुवं प्रियः ।
आत्मना हि कृतं पापमात्मनैव हि भुज्यते ॥ १६७ ॥
सोऽहं पापमतिश्चैव पापकर्मरतः सदा ।
पतिष्यामि महाघोरे नरके नात्र संशयः ॥ १६८ ॥
नूनं मम नृशंसस्य प्रत्यादर्शः सुदर्शितः ।
प्रयच्छता स्वमांसानि कपोतेन महात्मना ॥ १६९ ॥
अद्य प्रभृति देहं स्वं सर्वभोगविवर्जितम् ।
तोयं स्वल्पं यथा ग्रीष्मे शोषयिष्याम्यहं पुनः ॥ १७० ॥
शीतवातातपसहः कृशाङ्गो मलिनस्तथा ।
उपवासैर्बहुविधैश्चरिष्ये धर्ममुत्तमम् ॥ १७१ ॥
ततो यष्टिं शलाकां च जालकं पञ्जरं तथा ।
बभञ्ज लुब्धको दीनां कपोतीं च मुमोच ताम् ॥ १७२ ॥
लुब्धकेन ततो मुक्ता दृष्ट्वाग्नौ पतितं पतिम् ।
कपोती विललापार्ता शोकसंतप्तमानसा ॥ १७३ ॥
न कार्य्यमद्य मे नाथ ! जीवितेन त्वया विना ।
दीनायाः पतिहीनायाः किं नार्या जीविते फलम् ॥ १७४ ॥
मनोदर्पस्त्वहंकारः कुलपूजा च बन्धुषु ।
दासभृत्यजनेष्वाज्ञा वैधव्येन प्रणश्यति ॥ १७५ ॥

एवं विलप्य बहुशः कृपणं भृशदुःखिता ।
पतिव्रता सुसन्दीप्तं तमेवाग्निं विवेश सा ॥ १७६ ॥
ततो दिव्याम्बरधरा दिव्याभरणभूषिता ।
भर्तारं सा विमानस्थं ददर्श स्वं कपोतिका ॥ १७७ ॥
सोऽपि दिव्यतनुर्भूत्वा यथार्थमिदमब्रवीत् ॥
अहो मामनुगच्छन्त्या कृतं साधु शुभे त्वया ॥ १७८ ॥
तिस्रः कोट्योऽर्धकोटी च यानि रोमाणि मानुषे ।
तावत्कालं वसेत्स्वर्गे भर्तारं यानुगच्छति ॥ १७९ ॥
कपोतदेहः सूर्यास्ते प्रत्यहं सुखमन्वभूत् ।
कपोतदेहवत्सासीत्प्राक्पुण्यप्रभवं हि तत् ॥ १८० ॥
हर्षाविष्टस्ततो व्याधो विवेश च वनं घनम् ।
प्राणिहिंसां परित्यज्य बहुनिर्वेदवान्भृशम् ॥ १८१ ॥
तत्र दावानलं दृष्ट्वा विवेश विरताशयः ।
निर्दग्धकल्मषो भूत्वा स्वर्गसौख्यमवाप्तवान् ॥ १८२ ॥

अतोऽहं ब्रवीमि—श्रूयते हि कपोतेन' इति ।

तच्छ्रुत्वारिमर्दनो दीप्ताक्षं पृष्टवान्—एवमवस्थिते किं भवान्मन्यते ।' सोऽब्रवीत्—'देव' न हन्तव्य एवायम् । यतः—

या ममोद्विजते नित्यं सा मामद्यावगूहते ।
प्रियकारक भद्रं ते यन्ममास्ति हरस्व तत् ॥ १८३ ॥

चौरेण चाप्युक्तम्—

हर्तव्यं ते न पश्यामि हर्तव्यं चेद्भविष्यति ।
पुनरप्यागमिष्यामि यदीयं नावगूहते' ॥ १८४ ॥

अरिमर्दनः पृष्टवान्—'का च नावगूहते, कश्चायं चौर इति विस्तरतः श्रोतुमिच्छामि ।' दीप्ताक्षः कथयति—

# कथा ( ८ )।

अस्ति कस्मिंश्चिदधिष्ठाने[1] कामातुरो नाम वृद्धवणिक्। तेन च कामोपहतचेतसा मृतभार्येण काचिन्निर्धनवणिक्सुता प्रभूतं धनं दत्त्वोद्वाहिता[2]। अथ सा [3]दुःखाभिभूता तं वृद्धवणिजं द्रष्टुमपि न शशाक। युक्तं चैतत्।

श्वेतं पदं शिरसि यत्तु शिरोरुहाणां
स्थानं परं परिभवस्य तदेव पुंसाम्।
आरोपितास्थिशकलं परिहृत्य यान्ति
चाण्डालकूपमिव दूरतरं तरुण्यः॥ १८५॥

तथा च—

गात्रं संकुचितं गतिर्विगलिता दन्ताश्च नाशं गता
दृष्टिर्भ्राम्यति रूपमप्युपहतं वक्त्रं च लालायते।
वाक्यं नैव करोति बान्धवजनः पत्नी न शुश्रूषते
धिक्कष्टं जरयाभिभूतपुरुषं पुत्रोऽप्यवज्ञायते॥ १८६॥

अथ कदाचित्सा तेन सहैकशयने पराङ्मुखी यावत्तिष्ठति, तावद् गृहे चौरः प्रविष्टः। सापि तं चौरं दृष्ट्वा भयव्याकुलिता वृद्धमपि तं पतिं गाढं समालिलिङ्ग। सोऽपि विस्मयात्पुल[4]-काञ्चितसर्वगात्रश्चिन्तयामास—'अहो, किमेषा मामद्यावगूहते[5]।' यावन्निपुणतया पश्यति, तावद् गृहकोणैकदेशे चौरं दृष्ट्वा व्यचिन्तयत्—'नूनमेषास्य भयान्मामालिङ्गति' इति ज्ञात्वा तं चौरमाह—

'या ममोद्विजते नित्यं सा मामद्यावगूहते।
प्रियकारक भद्रं ते यन्ममास्ति हरस्व तत्'॥ १८७॥

---

१ नगरे। २ विवाहिता। ३ पत्युः वार्द्धक्येन दुःखपरिव्याप्ता। ४ पुलकाञ्चितसर्वगात्रः-पुलकितसर्वशरीरः। ५ अवगूहते-आलिङ्गति।

तच्छ्रुत्वा चौरोऽप्याह—

हर्तव्यं ते न पश्यामि हर्तव्यं चेद्भविष्यति ।
पुनरप्यागमिष्यामि यदीयं नावगूहते' ॥ १८८ ॥

तस्माच्चौरस्याप्युपकारिणः श्रेयश्चिन्त्यते, किं पुनर्न शरणागतस्य । अपि चायं तैर्विप्रकृतोऽस्माकमेव पुष्ट्ये भविष्यति तदीयरन्ध्रदर्शनाय चेति । अनेककारणेनायमवध्यः' इति ।

एतदाकर्ण्यारिमर्दनोऽन्यं सचिवं वक्रनासं पप्रच्छ—'भद्र ! सांप्रतमेवंस्थिते किं कर्तव्यम् ।' सोऽब्रवीत्—'देव, अवध्योऽयम् । यतः—

शत्रवोऽपि हितायैव विवदन्तः परस्परम् ।
चौरेण जीवितं दत्तं राक्षसेन तु गोयुगम्' ॥ १८९ ॥

अरिमर्दनः प्राह—'कथमेतत् ।' वक्रनासः कथयति—

## कथा ( ९ )

अस्ति कस्मिंश्चिदधिष्ठाने दरिद्रो द्रोणनामा ब्राह्मणः प्रतिग्रहधनः[1] सततं विशिष्टवस्त्रानुलेपनगन्धमाल्यालंकारताम्बूलादिभोगपरिवर्जितः [2]प्ररूढकेशश्मश्रुनखरोमोपचितः शीतोष्णवातवर्षादिभिः परिशोषितशरीरः । तस्य च केनापि यजमानेनानुकम्पया शिशुगोयुगं दत्तम् । ब्राह्मणेन च बालभावादारभ्य याचितघृततैलयवसादिभिः संवर्ध्य सुपुष्टं कृतम् । तच्च दृष्ट्वा सहसैव कश्चिच्चौरश्चिन्तितवान्—अहमस्य ब्राह्मणस्य गोयुगमिदमपहरिष्यामि ।' इति निश्चित्य निशायां बन्धनपाशं

---

१ प्रतिग्रहधनः-दानग्रहणमात्रजीविक इत्यर्थः । २ प्ररूढकेशेति-प्रकर्षेण वृद्धिंगतैः केशैः, श्मश्रुभिः, नखैः रोमभिः शरीरजातलोमैश्च उपचितः व्याप्तः ।

गृहीत्वा यावत्प्रस्थितः, तावदर्धमार्गे [1]प्रविरलतीक्ष्णदन्तपङ्क्तिरु-न्नतनासावंशः[2] [3]प्रकटरक्तान्तनयनो[4]ऽपचितस्नायुसंततिर्नतगात्रः शुष्ककपोलः [5]सुहुतहुतवहपिङ्गलश्मश्रुकेशशरीरः कश्चिद् दृष्टः । दृष्ट्वा च तं तीव्रभयत्रस्तोऽपि चौरोऽब्रवीत्—'को भवान्, इति । स आह—'सत्यवचनोऽहं ब्रह्मराक्षसः । भवानप्यात्मानं निवे-दयतु ।' सोऽब्रवीत्—'अहं क्रूरकर्मा चौरः । दरिद्रब्राह्मणस्य गोयुगं हर्तुं प्रस्थितोऽस्मि ।' अथ जातप्रत्ययो राक्षसोऽब्रवीत्—भद्र, [6]षष्ठाह्नकालिकोऽहम् । अतस्तमेव ब्राह्मणमद्य भक्षयिष्या-मि । तत्सुन्दरमिदम् । [7]एककार्यावेवावाम् ।' अथ तौ तत्र गत्वैकान्ते कालमन्वेषयन्तौ स्थितौ । प्रसुप्ते च ब्राह्मणे तद्भ-क्षणार्थं प्रस्थितं राक्षसं दृष्ट्वा चौरोऽब्रवीत्—'भद्र, नैष न्यायः, यतो गोयुगे मयापहृते पश्चात्त्वमेनं ब्राह्मणं भक्षय ।' सोऽब्रवीत्—'कदाचिदयं ब्राह्मणो गोशब्देन बुध्येत, तदानर्थकोऽयं ममा-रम्भः स्यात् ।' चौरोऽप्यब्रवीत्—'तवापि यदि भक्षणायोप-स्थितस्यान्तर एकोऽप्यन्तरायः[8] स्यात्, तदाहमपि न शक्नो-मि गोयुगमपहर्तुम् । अतः प्रथमं मयापहृते गोयुगे पश्चात्त्वया

---

१ प्रविरलेति-प्रविरला अतिस्वल्पा तीक्ष्णा निशिता दन्तपङ्क्तिर्यस्य तथाभूतः । २ उन्नतनासावंशः-उत्तुङ्गनासिकादण्डः । ३ प्रकटरक्तान्तनयनः प्रकटे अत्यधिके रक्तान्ते लोहितप्रान्ते नयने यस्य सः । ४ अपचित-स्नायुसन्ततिः-अपचिता कृशत्वाद् बहिर्निःसृता स्नायुसन्ततिः धमनीसमूहो यस्य सः । ५ सुहुतः सुष्ठु शोभनं यथा तथा हुतः कृतहोमः यः हुतवहः अग्निः, तद्वत् पिङ्गलं पिङ्गलवर्णं श्मश्रुकेशशरीरं यस्य तथाभूतः । ६ षष्ठा-ह्नकालिकः-अह्नः षष्ठः भागः षष्ठाह्नः, षष्ठाह्न एव कालः षष्ठाह्नकालः, तत्र भुङ्क्ते इति षष्ठाह्नकालिकः । दिवसम् अष्टभिर्यामार्धैर्विभज्य तस्य षष्ठे यामार्द्धे यः सदा भुङ्क्ते तथाभूत इति भावः । ७ एकं गो-ब्राह्मण-हरणरूपं कार्य्यं चौरकर्म ययोस्तौ । ८ विघ्नः ।

ब्राह्मणो भक्षयितव्यः । इत्थं चाहमहमिकया तयोर्विवदतोः समुत्पन्ने द्वैधे प्रतिरववशाद् ब्राह्मणो जजागार । अथ तं चौरोऽब्रवीत्—'ब्राह्मण, त्वामेवायं राक्षसो भक्षयितुमिच्छति ।' इति । राक्षसोऽप्याह—'ब्राह्मण, चौरोऽयं गोयुगं तेऽपहर्तुमिच्छति ।' एवं श्रुत्वोत्थाय ब्राह्मणः सावधानो भूत्वेष्टदेवतामन्त्रध्यानेनात्मानं राक्षसादुद्गूर्णलगुडेन[1] च चौराद्गोयुगं ररक्ष । अतोऽहं ब्रवीमि—'शत्रवोऽपि हितायैव' इति ॥

अथ तस्य वचनमवधार्यारिमर्दनः पुनरपि प्राकारकर्णमपृच्छत्—'कथय किमत्र मन्यते भवान् ।' सोऽब्रवीत्—'देव, अवध्य एवायम्, यतो रक्षितेनानेन कदाचित् परस्परप्रीत्या कालः सुखेन गच्छति । उक्तं च—

परस्परस्य मर्माणि ये न रक्षन्ति जन्तवः ।
त एव निधनं यान्ति वल्मीकोदरसर्पवत्' ॥ १९० ॥

अरिमर्दनोऽब्रवीत्—'कथमेतत् ।' प्राकारकर्णः कथयति—

## कथा (१०)

अस्ति कस्मिंश्चिन्नगरे देवशक्तिर्नाम राजा । तस्य च पुत्रो [2]जठरवल्मीकाश्रयेणोरगेण प्रतिदिनं प्रत्यङ्गं क्षीयते । [3]अनेकोपचारैः सद्वैद्यैः सच्छास्त्रोपदिष्टौषधयुक्त्यापि चिकित्स्यमानो न स्वास्थ्यमाप्नोति । अथासौ राजपुत्रो निर्वेदाद्देशान्तरं गतः । कस्मिंश्चिन्नगरे भिक्षाटनं कृत्वा महति देवालये कालं यापयति । अथ तत्र नगरे बलिर्नाम राजास्ते । तस्य च द्वे दुहितरौ यौवनस्थे तिष्ठतः । ते च प्रतिदिवसमादित्योदये पितुः पादा-

१ उत्क्षिप्तेन दण्डेन । २ जठरमेव उदरमेव वल्मीकं जठरवल्मीकं तदेवाश्रयो यस्य सः तेन, उदरस्थेनेत्यर्थः । ३ नानाविधैरुपायैः ।

न्तिकमागत्य नमस्कारं चक्रतुः । तत्र चैकाब्रवीत्—'विजयस्व महाराज, यस्य प्रसादात्सर्वं सुखं लभ्यते।' द्वितीया तु 'विहितं[1] भुङ्क्ष्व महाराज' इति ब्रवीति । तच्छ्रुत्वा प्रकुपितो राजाब्रवीत्—'भो मन्त्रिन्, एनां दुष्टभाषिणीं कुमारिकां कस्यचिद् वैदेशिकस्य प्रयच्छ । येन निजविहितमियमेव भुङ्क्ते । अथ 'तथा' इति [2]प्रतिपद्य 'अल्पपरिवारा सा कुमारिका मन्त्रिभिस्तस्य देवकुलाश्रितराजपुत्रस्य प्रतिपादिता । सातिप्रहृष्टमानसा तं पतिं देववत्प्रतिपद्यादाय चान्यविषयं गता । ततः कस्मिंश्चिद् दूरतरनगरप्रदेशे तड़ागतटे राजपुत्रमावासरक्षार्थे निरूप्य, स्वयं च घृततैललवणतण्डुलादिक्रयनिमित्तं सपरिवारा गता । कृत्वा च क्रयविक्रयं यावदागच्छति तावत्स राजपुत्रो वल्मीकोपरि कृतमूर्धा प्रसुप्तः । तस्य च मुखाद् भुजगः फणां निष्क्राम्य वायुमश्नाति । तत्रैव च वल्मीकेऽपरः सर्पो निष्क्रम्य तथैवासीत् । अथ तयोः परस्परदर्शनेन क्रोधसंरक्तलोचनयोर्मध्याद्वल्मीकस्थेन सर्पेणोक्तम्—'भो भो दुरात्मन्, कथं सुन्दरसर्वाङ्गं राजपुत्रमित्थं [3]कदर्थयसि ।' मुखस्थोऽहिरब्रवीत्—'भो भोः, त्वयापि दुरात्मानस्य वल्मीकस्य मध्ये कथमिदं दूषितं [4]हाटकपूर्णं कलशयुगलम् । इत्येवं परस्परस्य मर्माण्युद्घाटितवन्तौ । पुनर्वल्मीकस्थोऽहिरब्रवीत्—'भो दुरात्मन्, भेषजमिदं ते किं कोऽपि न जानाति, [5]यज्जीर्णोत्फालितकाञ्जिकराजिकापानेन भवान्विनाशमुपयाति । अथोदरस्थोहिरब्रवीत्—'तवाप्येतद्भेषजं किं कश्चिदपि न वेत्ति, यदुष्णतैलेन वा महोष्णोदकेन तव

---

१ विहितं-स्वकर्मणोपार्जितम् । २ अङ्गीकृत्य । ३ पीड़यसि । ४ सुवर्णपूर्णम् । ५ जीर्णयोः अतिप्राचीनयोः उत्फालितयोः सम्यग् आलोडितयोः काञ्जिकराजिकयोः पानेन । काञ्जिकं राजिकेति शब्दद्वयस्य भाषायां-काञ्जी, राई, इति नाम्ना प्रसिद्धिर्वर्तते ।

विनाशः स्यात्' इति । एवं च सा राजकन्या विटपान्तरिता तयोः परस्परालापान्मर्मभयानाकर्ण्य तथैवानुष्ठितवती । विधायाव्यङ्गं नीरोगं भर्तारं निधिं च परमासाद्य स्वदेशाभिमुखं प्रायात् । पितृमातृस्वजनैः प्रतिपूजिता विहितोपभोगं प्राप्य सुखेनावस्थिता । अतोऽहं ब्रवीमि—'परस्परस्य मर्माणि' इति । तच्च श्रुत्वा स्वयमरिमर्दनोऽप्येवं समर्थितवान् । तथा चानुष्ठितं दृष्ट्वान्तर्लीनं विहस्य रक्ताक्षः पुनरब्रवीत्—'कष्टम् । विनाशितोऽयं भवद्भिरन्यायेन स्वामी । उक्तं च—

अपूज्या यत्र पूज्यन्ते पूज्यानां तु विमानना ।
त्रीणि तत्र प्रवर्तन्ते दुर्भिक्षं मरणं भयम् ॥ १९१ ॥

तथा च—

प्रत्यक्षेऽपि कृते पापे मूर्खः साम्ना प्रशाम्यति ।
रथकारः स्वकां भार्यां सजारां शिरसावहत् ॥ १९२ ॥

मन्त्रिणः प्राहुः—'कथमेतत् ।' रक्ताक्षः कथयति—

## कथा (११)

अस्ति कस्मिंश्चिदधिष्ठाने वीरवरो नाम रथकारः । तस्य भार्या कामदमनी । सा च पुंश्चली जनापवादसंयुक्ता । सोऽपि तस्याः परीक्षणार्थं व्यचिन्तयत्—'अथ मयास्याः परीक्षणं कर्तव्यम् । उक्तं च यतः —

यदि स्यात्पावकः शीतः प्रोष्णो वा शशलाञ्छनः ।
स्त्रीणां तदा सतीत्वं स्याद्यदि स्याद् दुर्जनो हितः ॥१९३॥

जानामि चैनां लोकवचनादसतीम् । उक्तं च—

यच्च वेदेषु शास्त्रेषु न दृष्टं न च संश्रुतम् ।
तत्सर्वं वेत्ति लोकोऽयं यत्स्याद् ब्रह्माण्डमध्यगम्' ॥१९४॥

एवं संप्रधार्य भार्यामवोचत्—'प्रिये, प्रभातेऽहं ग्रामान्तरं यास्यामि । तत्र कतिचिद्दिनानि लगिष्यन्ति । तत्त्वया किमपि पाथेयं मम योग्यं विधेयम् ।' सापि तद्वचनं श्रुत्वा हर्षितचित्तौत्सुक्यात्सर्वकार्याणि संत्यज्य सिद्धमन्नं घृतशर्कराप्रायमकरोत् । अथवा साध्विदमुच्यते—

दुर्दिवसे घनतिमिरे वर्षति जलदे महाटवीप्रभृतौ ।
पत्युर्विदेशगमने परमसुखं जघनचपलायाः ॥ १९५ ॥

अथासौ प्रत्यूष उत्थाय स्वगृहान्निर्गतः । सापि तं प्रस्थितं विज्ञाय प्रहसितवदनाङ्गसंस्कारं[1] कुर्वाणा कथंचित्तं दिवसमत्यवाहयत्[2] । अथ पूर्वपरिचितविटगृहे गत्वा तं प्रत्युक्तवती—'स दुरात्मा मे पतिर्ग्रामान्तरं गतः । तत्त्वयास्मद्गृहे प्रसुप्ते जने समागन्तव्यम् ।' तथानुष्ठिते स रथकारोऽरण्ये दिनमतिवाह्य[3] प्रदोषे स्वगृहेऽपरद्वारेण प्रविश्य शय्याधस्तले निभृतो भूत्वा स्थितः । एतस्मिन्नन्तरे स[4] देवदत्तः समागत्य तत्र [5]शरण उपविष्टः । तं दृष्ट्वा रोषाविष्टचित्तो रथकारो व्यचिन्तयत्—'किमेनमुत्थाय हन्मि, अथवा[6] हेलयैव प्रसुप्तौ द्वावप्येतौ व्यापादयामि । परं पश्यामि तावदस्याश्चेष्टितम् । शृणोमि चानेन सहालापान् ।' अत्रान्तरे सा गृहद्वारं निभृतं पिधाय शयनतलमारूढा । अथ तस्यास्तत्रारोहन्त्या रथकारशरीरेण पादो विलग्नः । ततः सा व्यचिन्तयत्—नूनमेतेन दुरात्मना रथकारेण मत्परीक्षणार्थं भाव्यम् । ततः स्त्रीचरित्रविज्ञानं किमपि करोमि ।' एवं तस्याश्चिन्तयन्त्याः स देवदत्तः स्पर्शो-

१ शरीरसंशोधनपूर्वकमङ्गरागादिविधानम् । २ यापयामास । ३ गमयित्वा । ४ देवदत्तः-देवदत्तनामा विटः । ५ शरणे गृहे । ६ हेलया-विना प्रयासम् ।

त्सुको बभूव । अथ तया कृताञ्जलिपुटयाभिहितम्—'भो महानुभाव, न मे शरीरं त्वया स्पर्शनीयम्, यतोऽहं पतिव्रता महासती च । न चेच्छापं दत्वा भस्मसात्करिष्यामि । स आह —'यद्येवं तर्हि त्वया किमहमाहूतः । साब्रवीत्—'भोः, शृणुष्वैकाग्रमनाः । अहमद्य प्रत्यूषे देवतादर्शनार्थं चण्डिकायतनं गता । तत्राकस्मात्खे वाणी संजाता—'पुत्रि, किं करोमि । भक्तासि मे त्वम् । परं षण्मासाभ्यन्तरे विधिनियोगाद्विधवा भविष्यसि' । ततो मयाभिहितम् 'भगवति, यथा त्वमापदं वेत्सि, तथा तत्प्रतीकारमपि जानासि । तदस्ति कश्चिदुपायो येन मे पतिः शतसंवत्सरजीवी भवति' । ततस्तयाभिहितम्—'वत्से, सन्नपि नास्ति, यतस्तवायत्तः स प्रतीकारः' । तच्छ्रुत्वा मयाभिहितम्—'देवि, यदि तन्मम प्राणैर्भवति तदादेशय येन करोमि । अथ देव्याभिहितम्---'यद्यद्यदिने परपुरुषेण सहैकस्मिञ्छयने समारुह्यालिङ्गनं करोषि, तत्तव भर्तृसक्तोऽपमृत्युस्तस्य संचरति । भर्तापि पुनर्वर्षशतं जीवति । तेन त्वं मयाभ्यर्थितः । तद्यत्किंचित्कर्तुमनस्तत्कुरुष्व । न हि देवतावचनमन्यथा भविष्यतीति निश्चयः ।' ततोऽन्तर्हासविकासमुखः स तदुचितमाचचार । सोऽपि रथकारो मूर्खस्तस्यास्तद्वचनमाकर्ण्य [1]पुलकाङ्किततनुः शय्याधस्तलान्निष्क्रम्य तामुवाच—साधु पतिव्रते, साधुकुलनन्दिनि, अहं दुर्जनवचनशङ्कितहृदयस्त्वत्परीक्षानिमित्तं [2]ग्रामान्तरव्याजं कृत्वात्र खट्वाधस्तले निभृतं [3]लीनः । तदेहि । आलिङ्गय माम् । त्वं स्वभर्तृभक्तानां[4]

१ पुलकैः रोमाञ्चैः अङ्किता व्याप्ता तनुः शरीरं यस्य सः रोमाञ्चितशरीर इत्यर्थः । २ ग्रामान्तरगमनरूपं कपटम् । ३ स्थितः । ४ स्वभर्तृभक्तानां-पतिव्रतास्त्रीणामित्यर्थः ।

मुख्या नारीणाम्, यदेवं ब्रह्मव्रतं[1] परसङ्गेऽपि[2] पालितवती। ममायुर्वृद्धिकृतेऽपमृत्युविनाशार्थं च त्वमेवं कृतवती।' तामेवमुक्त्वा सस्नेहमालिङ्गितवान्। स्वस्कन्धे तामारोप्य तमपि देवदत्तमुवाच—'भो महानुभाव, मत्पुण्यैस्त्वमिहागतः। त्वत्प्रसादान्मया प्राप्तं वर्षशतप्रमाणमायुः। तत्त्वमपि मामालिङ्ग्य मत्स्कन्धे समारोह।' इति जल्पन्ननिच्छन्तमपि देवदत्तमालिङ्ग्य बलात्स्वकीयस्कन्ध आरोपितवान्। ततश्च नृत्यं कृत्वा 'हे ब्रह्मव्रतधराणां धुरीण[3], त्वयापि मय्युपकृतम्' इत्याद्युक्त्वा स्कन्धादुत्तार्य यत्र यत्र स्वजनगृहद्वारादिषु बभ्राम; तत्र तत्र तयोरुभयोरपि तद्गुणवर्णनमकरोत्। अतोऽहं ब्रवीमि —'प्रत्यक्षेऽपि कृते पापे' इति। तत्सर्वथा मूलोत्खाता[4] वयं विनष्टाः स्मः। सुष्ठु खल्विदमुच्यते—

मित्ररूपा हि रिपवः संभाव्यन्ते विचक्षणैः।
ये हितं वाक्यमुत्सृज्य विपरीतोपसेविनः॥ १९६॥

तथा च—

सन्तोऽप्यर्था विनश्यन्ति देशकालविरोधिनः।
अप्राज्ञान्मन्त्रिणः प्राप्य तमः सूर्योदये यथा'॥ १९७॥

ततस्तद्वचोऽनादृत्य सर्वे ते स्थिरजीविनमुत्क्षिप्य स्वदुर्गमानेतुमारब्धाः। अथानीयमानः स्थिरजीव्याह—'देव अद्याकिंचित्करेणैतदवस्थेन किं मयोपसंगृहीतेन, यत्कारणमिच्छामि[5] दीप्तं

---

१ ब्रह्मव्रतं-तपोनियममित्यर्थः। तथा च—
"ब्रह्माणं काञ्चनं कृत्वा तिलराशिसमन्वितम्।
सम्पूज्य विप्रदाम्पत्यं माल्यवस्त्रविभूषितम्॥
एतद् ब्रह्मव्रतं नाम निर्वाणफलदं नृणाम्।" इति पद्मपुराणम्।

२ परपुरुषसहवासेऽपि। ३ अग्रणीः। ४ मूलोत्खाताः—समूलम् उन्मूलिता इत्यर्थः। ५ यत्कारणमिच्छामि-सामर्थ्याभावाद् अभिलषामि।

वह्निमनुप्रवेष्टुम् । तदर्हसि मामग्निप्रदानेन [1]समुद्धर्तुम् ।' अथ रक्ताक्षस्तस्यान्तर्गतभावं ज्ञात्वाब्रवीत्—'किमर्थमग्निपतनमिच्छसि ।' सोऽब्रवीत्—'अहं तावद्युष्मदर्थे इमामापदं मेघवर्णेन प्रापितः । तदिच्छामि तेषां वैरयातनार्थमुलूकत्व[2]मिति । तच्च श्रुत्वा राजनीतिकुशलो रक्ताक्षः प्राह—'भद्र' कुटिलस्त्वं कृतकवचनचतुरश्च । तत्त्वमुलूकयोनिगतोऽपि स्वकीयामेव वायसयोनिं बहुमन्यसे । श्रूयते चैतदाख्यानकम्—

सूर्यं भर्तारमुत्सृज्य पर्जन्यं मारुतं गिरिम् ।
स्वजातिं मूषिका प्राप्ता स्वजातिर्दुरतिक्रमा' ॥ १६८ ॥

मन्त्रिणः प्रोचुः—'कथमेतत् ।' रक्ताक्षः कथयति—

## कथा ( १२ )

अस्ति [3]विषमशिलातलस्खलिताम्बुनिर्घोषश्रवणसंत्रस्तमत्स्यपरिवर्तनसञ्जनितश्वेतफेनशबलतरङ्गाया गङ्गायास्तटे[4]जपनियमतपःस्वाध्यायोपवासयोगक्रियानुष्ठानपरायणैः [5]परिपूत-

१ समुद्धर्तुं रक्षितुमित्यर्थः । २ मृतोऽहम् उलूकीभूय निजं शत्रुं निर्य्यातयितुमिच्छामीत्यर्थः । ३ विषमेषु उच्चावचेषु शिलातलेषु स्खलितानां पतितानां अम्बूनां जलानां निर्घोषस्य हरहर इति शब्दस्य श्रवणात् सन्त्रस्ताः भीताः ये मत्स्याः तेषां परिवर्तनेन उल्लुण्ठनप्रलम्फनेन सञ्जनिता ये श्वेताः शुक्लाः फेनाः तैः शबलाः चित्रिता तरङ्गा यस्यास्तस्याः । ४ जपः मनसा मन्त्रोच्चारणम् , नियमः इन्द्रियवशीकरणम्, तपः चान्द्रायणादि, स्वाध्यायः वेदाध्ययनम्, उपवासः भोजनाभावस्वरूपः, योगः-चित्तवृत्तिनिरोधरूपं जीवब्रह्मणोरैक्यचिन्तनम्, क्रिया होमादिका, एतासां अनुष्ठानं आचरणं परं प्रधानं अयनं आश्रयो येषान्तैः । ५ परिपूतानि अति पवित्राणि परिमितानि अल्पानि यानि जलानि तानि जिघृक्षुभिः ग्रहीतुमिच्छुभिः । अत्यल्पजलपायिभिरित्यर्थः ।

परिमितजलजिघृक्षुभिः [1]कन्दमूलफलशैवलाभ्यवहारकदर्थितशरीरैर्व[2]ल्कलकृतकौपीनमात्रप्रच्छादनैस्तपस्विभिरा[3]कीर्णमाश्रमपदम् । तत्र याज्ञवल्क्यो नाम[3] कुलपतिरासीत् । तस्य जाह्नव्यां स्नात्वोपस्प्रष्टुमारब्धस्य[5] करतले श्येनमुखात्परिभ्रष्टा मूषिका पतिता । तां दृष्ट्वा न्यग्रोधपत्रेऽवस्थाप्य पुनः स्नात्वोपस्पृश्य च प्रायश्चित्तादिक्रियां कृत्वा च मूषिकां तां स्वतपोबलेन कन्यकां कृत्वा समादाय स्वाश्रममानिनाय । अनपत्यां च जायामाह—'भद्रे' गृह्यतामियं तव दुहितोत्पन्ना । प्रयत्नेन संवर्धनीया' इति । ततस्तया संवर्धिता लालिता पालिता च यावद् द्वादशवर्षा संजज्ञे । अथ विवाहयोग्यां तां दृष्ट्वा भर्तारमेवं जायोवाच—' भो भर्तः; किमिदं नाववुध्यसे यथास्याः स्वदुहितुर्विवाहसमयातिक्रमो भवति।' असावाह—'साधूक्तम् । उक्तं च—

स्त्रियः पूर्वं सुरैर्भुक्ताः सोमगन्धर्ववह्निभिः ।
भुञ्जते मानुषाः पश्चात्तस्माद्दोषो न विद्यते ॥ १९९ ॥
सोमस्तासां ददौ शौचं गन्धर्वाः शिक्षितां गिरम् ।
पावकः सर्वमेध्यत्वं तस्मान्निष्कल्मषाः स्त्रियः ॥ २०० ॥
असंप्राप्तरजा गौरी प्राप्ते रजसि रोहिणी ।
अव्यञ्जना भवेत्कन्या कुचहीना च नग्निका ॥ २०१ ॥

---

१ कन्दानां मूलविशेषाणां, मूलानां मूलकादीनां, फलानां, शैवलानाञ्च अभ्यवहारेण भोजनेन कदर्थितानि क्लेशितानि शरीराणि यैस्तैः । २ वल्कलेन वृक्षत्वचा कृतं यत् कौपीनं तदेव तन्मात्रं प्रच्छादनं आच्छादनं ( वसनमित्यर्थः ) येषां तैः । ३ आकीर्णम्-व्याप्तम् । ४ कुलपतिः—

"मुनीनां दशसाहस्रं योऽन्नदानादिपोषणात् ।
अध्यापयति विप्रर्षिः स वै कुलपतिः स्मृतः ॥"

५ उपस्प्रष्टुम् आरब्धस्य—आचमितुम् उपक्रान्तस्य ।

व्यञ्जनैस्तु समुत्पन्नैः सोमो भुङ्क्ते हि कन्यकाम् ।
पयोधराभ्यां गन्धर्वा रजस्यग्निः प्रतिष्ठितः ॥ २०२ ॥
तस्माद्विवाहयेत्कन्यां यावन्नर्तुमती भवेत् ।
विवाहश्चाष्टवर्षायाः कन्यायास्तु प्रशस्यते ॥ २०३ ॥
व्यञ्जनं हन्ति वै पूर्वं परं चैव पयोधरौ ।
रतिरिष्टांस्तथा लोकान्हन्याच्च पितरं रजः ॥ २०४ ॥
ऋतुमत्यां तु तिष्ठन्त्यां स्वेच्छादानं विधीयते ।
तस्मादुद्वाहयेन्नग्नां मनुः स्वायंभुवोऽब्रवीत् ॥ २०५ ॥
पितृवेश्मनि या कन्या रजः पश्यत्यसंस्कृता ।
अविवाह्या तु सा कन्या जघन्या वृषली स्मृता ॥ २०६ ॥
श्रेष्ठेभ्यः सदृशेभ्यश्च जघन्येभ्यो रजस्वला ।
पित्रा देया विनिश्चित्य यतो दोषो न विद्यते ॥ २०७ ॥

अतोऽहमेनां सदृशाय प्रयच्छामि, नान्यस्मै, उक्तं च—

ययोरेव समं वित्तं ययोरेव समं कुलम् ।
तयोर्विवाहः सख्यं च न तु पुष्टविपुष्टयोः ॥ २०८ ॥

तथा च—

कुलं च शीलं च सनाथता च
विद्या च वित्तं च वपुर्वयश्च ।
एतान्गुणान्सप्त विचिन्त्य देया
कन्या बुधैः शेषमचिन्तनीयम् ॥ २०९ ॥

तद्यद्यस्या रोचते तदा भगवन्तमादित्यमाहूय तस्मै प्रयच्छामि । सा प्राह—'इह को दोषः । क्रियतामेतत् ।' अथ मुनिना रविराहूतः । [1]वेदमन्त्रामन्त्रणप्रभावात्तत्क्षणादेवाभ्युपगम्यादित्यः प्रोवाच—'भगवन्' किमहमाहूतः ।' सोऽब्रवीत्—'एषा मदी-

[1] वेदमन्त्रेण यद् आमन्त्रणं-आह्वानं, तस्य प्रभावात्-सामर्थ्यात् ।

या कन्यका तिष्ठति । यद्येषा त्वां वृणोति तर्हुद्वहस्व' इति । एवमुक्त्वा स्वदुहितरमुवाच—'पुत्रि ! किं तव रोचत एष भगवांस्त्रैलोक्यदीपको भानुः ।' पुत्रिकाब्रवीत्—'तात' अतिदहनात्मकोऽयम् । नाहमेनमभिलषामि । तदस्मादन्यः प्रकृष्टतरः कश्चिदाहूयताम् ।' अथ तस्यास्तद्वचनं श्रुत्वामुनिर्भास्करमुवाच—'भगवन्' त्वत्तोऽप्यधिकोऽस्ति कश्चित् ।' भास्करः प्राह—'अस्ति मत्तोऽप्यधिको मेघो येनाच्छादितोऽहमदृश्यो भवामि ।' अथ मुनिना मेघमप्याहूय कन्याभिहिता—'पुत्रिके, अस्मै त्वां प्रयच्छामि ।' सा प्राह—कृष्णवर्णोऽयं [1]जडात्मा च । तदस्मादन्यस्य प्रधानस्य कस्यचिन्मां प्रयच्छ ।' अथ मुनिना मेघोऽपि पृष्टः—'भो भो मेघ, त्वत्तोऽप्यधिकोऽस्ति कश्चित् ।' मेघेनोक्तं,—'मत्तोऽपि अधिकोऽस्ति वायुः । वायुना हतोऽहं सहस्रधा यामि ।' तच्छ्रुत्वा मुनिना वायुराहूतः । आह च—'पुत्रिके' किमेष वायुस्ते विवाहायोत्तमः प्रतिभाति ।' साब्रवीत्—'तात' अतिचपलोऽयम् । तदस्माद्प्यधिकः कश्चिदानीयताम् ।' मुनिराह—'वायो ! त्वत्तोऽप्यधिकोऽस्ति कश्चित् ?' पवनेनोक्तम्—मत्तोऽप्यधिकोऽस्ति पर्वतः, तेन संस्तभ्य बलवानप्यहं ध्रियेे ।' अथ मुनिः पर्वतमाहूय कन्यामुवाच—'पुत्रिके' त्वामस्मै प्रयच्छामि ।' सा प्राह—'तात' कठिनात्मकोऽयं स्तब्धश्च । तदन्यस्मै देहि माम् ।' मुनिना पर्वतः पृष्टः—'भोः पर्वतराज' त्वत्तोऽप्यधिकोऽस्ति कश्चित् ।' गिरिणोक्तम्—'मत्तोऽप्यधिकाः सन्ति मूषिका ये मच्छरीरं बलाद्विदारयन्ति ।' ततो मुनिर्मूषिकमाहूय तस्या अदर्शयत् । आह च—'पुत्रिके' त्वामस्मै प्रयच्छामि । किमेष प्रतिभाति ते मूषिकराजः ।' सापि तं दृष्ट्वा स्वजातीय एष इति

१ जडात्मा—डलयोरभेदात्-जलात्मा, जलमयतया अतिशीतल इत्यर्थः ।

मन्यमाना पुलकोद्भूषितशरीरा[1] वाच—'तात' मां मूषिकां कृत्वास्मै प्रयच्छ । येन स्वजातिविहितं गृहधर्ममनुतिष्ठामि ।' ततः सोऽपि स्वतपोबलेन तां मूषिकां कृत्वा तस्मै प्रादात् । अतोऽहं ब्रवीमि—'सूर्यं भर्तारमुत्सृज्य' इति । अथ रक्ताक्ष-वचनमनादृत्य तैः स्ववंशविनाशाय स स्वदुर्गमुपनीतः । नीयमानश्चान्तर्लीनमवहस्य स्थिरजीवी व्यचिन्तयत्—

'हन्यतामिति येनोक्तं स्वामिनो हितवादिना ।
स एवैकोऽत्र सर्वेषां नीतिशास्त्रार्थतत्त्ववित् ॥ २१० ॥

तद्यदि तस्य वचनमकरिष्यन्नेते ततो न स्वल्पोऽप्यनर्थो-ऽभविष्यदेतेषाम् । अथ दुर्गद्वारं प्राप्यारिमर्दनोऽब्रवीत्—'भो भोः हितैषिणोऽस्य स्थिरजीविनो यथासमीहितं स्थानं प्रयच्छत ।' तच्च श्रुत्वा स्थिरजीवी व्यचिन्तयत्—'मया तावदेतेषां वधोपायश्चिन्तनीयः, स मया मध्यस्थेन न साध्यते । यतो मदीयमिङ्गितादिकं विचारयन्तस्तेऽपि सावधाना भविष्यन्ति । तद् दुर्गद्वारमधिश्रितोऽभिप्रेतं साधयामि ।' इति निश्चित्योलूकपतिमाह—'देव' युक्तमिदं यत्स्वामिना प्रोक्तम् । परमहमपि नीतिज्ञस्तेऽहितश्च । यद्यप्यनुरक्तः शुचिस्तथापि दुर्गमध्य आवासो नार्हः । तदहमत्रैव दुर्गद्वारस्थः प्रत्यहं [2]भवत्पादपद्मरजःपवित्रीकृततनुः सेवां करिष्यामि । [3]'तथा' इति प्रतिपन्ने प्रतिदिनमुलूकपतिसेवकास्ते प्रकाममाहारं कृत्वोलूकराजादेशात्प्रकृष्टमांसाहारं स्थिरजीविने प्रयच्छन्ति । अथ कतिपयैरेवाहोभिर्मयूर इव स बलवान्संवृत्तः । अथ

१ पुलकेन हर्षजनितेन रोमाञ्चेन उद्भूषितमलंकृतं शरीरं यस्याः सा ।
२ भवत्पादरजःपवित्रीकृततनुः-भवतः पादरजसा चरणधूलिना पवित्रीकृता तनुर्येन तथाभूतः । ३ तथा इति प्रतिपन्ने "तथाऽस्तु" इत्युक्त्वा स्वीकृतवति तस्मिन्न उलूकराजे ।

रक्ताक्षः स्थिरजीविनं पोष्यमाणं दृष्ट्वा सविस्मयो मन्त्रिजनं राजानं च प्रत्याह—'अहो मूर्खोऽयं मन्त्रिजनो सर्वांश्चेत्येव-महमवगच्छामि । उक्तं च—

पूर्वं तावदहं मूर्खो द्वितीयः पाशबन्धकः ।
ततो राजा च मन्त्री च सर्वं वै मूर्खमण्डलम्' ॥ २११ ॥

ते प्राहुः—'कथमेतत् । रक्ताक्षः कथयति—

## कथा (१३)

अस्ति कस्मिंश्चित्पर्वतैकदेशे महान्वृक्षः । तत्र च सिन्धुक-नामा कोऽपि पक्षी प्रतिवसति स्म । तस्य पुरीषे[१] सुवर्णमुत्प-द्यते । अथ कदाचित् तमुद्दिश्य व्याधः कोऽपि समाययौ । स च पक्षी तदग्रत एव पुरीषमुत्ससर्ज । अथ पातसमकालमेव[२] तत्सुवर्णीभूतं दृष्ट्वा व्याधो विस्मयमगमत्—'अहो' मम शिशु-कालादारभ्य [३]शकुनिबन्धव्यसनिनोऽशीतिवर्षाणि समभूवन् । न च कदाचिदपि पक्षिपुरीषे सुवर्णं दृष्टम् ।' इति विचिन्त्य तत्र वृक्षे पाशं बबन्ध । अथासावपि पक्षी मूर्खस्तत्रैव विश्व-स्तचित्तो यथापूर्वमुपविष्टः । तत्कालमेव पाशेन बद्धः । व्याधस्तु तं पाशादुन्मुच्य पञ्जरके संस्थाप्य निजावासं नीतवान् । अथ चिन्तयामास—'किमनेन [४]सापायेन पक्षिणाहं करिष्यामि । यदि कदाचित्कोऽप्यमुमीदृशं ज्ञात्वा राज्ञे निवेद-यिष्यति, तन्नूनं प्राणसंशयो मे भवेत्, अतः स्वयमेव पक्षिणं राज्ञे निवेदयामि । इति विचार्य तथैवानुष्ठितवान् । अथ राजापि तं पक्षिणं दृष्ट्वा विकसितनयनवदनकमलः परां तुष्टि-

१ पुरीषे—विष्ठायाम् । २ पतनसमय एव । ३ शकुनिबन्धव्यसनिनः पक्षिबन्धनासक्तस्य । ४ सापायेन—विपत्तिजनकेनेत्यर्थः ।

मुपागतः। प्राह चैवम्—'हंहो रक्षापुरुषाः, एनं पक्षिणं यत्नेन रक्षत। अशनपानादिकं चास्य यथेच्छं प्रयच्छत।' अथ मन्त्रिणाभिहितम्—'किमनेनाश्रद्धेयव्याधवचनप्रत्ययमात्रपरिगृहीतेन[1] अण्डजेन। किं कदाचित्पक्षिपुरीषे सुवर्णं संभवति। तन्मुच्यतां पञ्जरबन्धनादयं पक्षी।' इति मन्त्रिवचनाद्राज्ञा मोचितोऽसौ पक्ष्युन्नतद्वारतोरणे समुपविश्य सुवर्णमयीं विष्ठां विधाय 'पूर्वं तावदहं मूर्खः' इति श्लोकं पठित्वा यथासुखमाकाशमार्गेण प्रायात्। अतोऽहं ब्रवीमि—'पूर्वं तावदहं मूर्खः, इति। अथ ते पुनरपि [2]प्रतिकूलदैवतया हितमपि रक्ताक्षवचनमनादृत्य भूयस्तं प्रभूतमांसादिविविधाहारेण पोषयामासुः। अथ रक्ताक्षः स्ववर्गमाहूय रहः प्रोवाच—'अहो, एतावदेवास्मद्भूपतेः कुशलं दुर्गं च। तदुपदिष्टं मया यत्कुलक्रमागतः[3] सचिवोऽभिधत्ते। तद्वयमन्यत्पर्वतदुर्गं संप्रति समाश्रयामः। उक्तं च यतः—

अनागतं यः कुरुते स शोभते
स शोच्यते यो न करोत्यनागतम्।
वनेऽत्र संस्थस्य समागता जरा
बिलस्य वाणी न कदापि मे श्रुता॥ २१२॥

ते प्रोचुः—'कथमेतत्।' रक्ताक्षः कथयति—

## कथा (१४)

कस्मिंश्चिद्वनोद्देशे खरनखरो[4]नाम सिंहः प्रतिवसति स्म। स कदाचिदितश्चेतश्च परिभ्रमन्क्षुत्क्षामकण्ठो[5] न किंचिदपि

१ अश्रद्धेयं यद् व्याधस्य वचनं तस्य प्रत्ययमात्रेणैव विश्वासेनैव परिगृहीतः तेन। २ विपरीतभागधेयतया। ३ वंशपरम्परागतः। ४ खरास्तीक्ष्णा नखरा यस्य सः। ५ क्षुधा क्षामः कृशः कण्ठो यस्य तथाभूतः।

[1]सत्त्वमाससाद । ततश्चास्तमनसमये[2] महतीं गिरिगुहामासाद्य प्रविष्टश्चिन्तयामास—'नूनमेतस्यां गुहायां रात्रौ केनापि सत्त्वेनागन्तव्यम् । तन्निभृतो भूत्वा तिष्ठामि । एतस्मिन्नन्तरे तत्स्वामी दधिपुच्छो[3] नाम शृगालः समायातः । स च यावत् पश्यति, तावत्सिंहपदपद्धति[4]र्गुहायां प्रविष्टा न च निष्क्रमणं गता । ततश्चाचिन्तयत्—' अहो, विनष्टोऽस्मि । नूनमस्यामन्तर्गतेन सिंहेन भाव्यम् । तत्किं करोमि । कथं ज्ञास्यामि ।' एवं विचिन्त्य द्वारस्थः [5]फूत्कर्तुमारब्धः—'अहो बिल, अहो बिल, इत्युक्त्वा तूष्णींभूय भूयोऽपि[6]तथैव प्रत्यभाषत—'भोः, किं न स्मरसि यन्मया त्वया सह [7]समयः कृतोऽस्ति । यन्मया बाह्यात्समागतेन त्वं वक्तव्यः । त्वया चाहमाकारणीय इति । तद्यदि मां नाह्वयसि ततोऽहं द्वितीयं बिलं यास्यामि ।' अथ तच्छ्रुत्वा सिंहश्चिन्तितवान्—'नूनमेषा गुहास्य समागतस्य सदा समाह्वानं करोति । परमद्य मद्भयान्न किञ्चिद् ब्रूते । अथवा साध्विदमुच्यते—

भयसंत्रस्तमनसां हस्तपादादिकाः क्रियाः ।
प्रवर्तन्ते न वाणी च वेपथुश्चाधिको भवेत् ॥ २१३ ॥

तदहमस्याह्वानं करोमि येन तदनुसारेण प्रविष्टोऽयं मे भोज्यतां यास्यति ।' एवं संप्रधार्य सिंहस्तस्याह्वानमकरोत् । अथ सिंहशब्देन सा गुहा प्र[8]तिरवसंपूर्णान्यानपि दूरस्थानरण्यजीवाँस्त्रासयामास । शृगालोऽपि पलायमान इमं श्लोकमपठत्—

'अनागतं यः कुरुते स शोभते
स शोच्यते यो न करोत्यनागतम् ।

---

१ सत्वं—प्राणिनम् । २ सायङ्काले । ३ दधिवत् श्वेतं पुच्छं यस्य तथाभूतः । ४ सिंहपदपद्धतिः—पादन्यासचिन्हम् । ५ फूत्कर्तुं आह्वातुमित्यर्थः । ६ तथा एव फूत्कृत्य एव । ७ समयः नियमः । ८ प्रतिध्वनिपूरिता ।

वनेऽत्र संस्थस्य समागता जरा
विलस्य वाणी न कदापि मे श्रुता ॥ २१४ ॥

तदेवं मत्वा युष्माभिर्मया सह गन्तव्यम्' इति । एवमभिधायात्मानुयायिपरिवारानुगतो[1] दूरदेशान्तरं रक्ताक्षो जगाम ।

अथ रक्ताक्षे गते स्थिरजीव्यतिहृष्टमना व्यचिन्तयत्—'अहो, कल्याणमस्माकमुपस्थितं यद्रक्ताक्षो गतः । यतः स दीर्घदर्शी । एते च मूढमनसः । ततो मम [2]सुखघात्याः संजाताः । उक्तं च यतः—

न दीर्घदर्शिनो यस्य मन्त्रिणः स्युर्महीपतेः ।
क्रमायाता ध्रुवं तस्य न चिरात्स्यात्परिक्षयः ॥२१५॥

अथवा साध्विदमुच्यते—

मन्त्रिरूपा हि रिपवः संभाव्यन्ते विचक्षणैः ।
ये सन्तं नयमुत्सृज्य सेवन्ते प्रतिलोमतः' ॥ २१६ ॥

एवं विचिन्त्य [3]स्वकुलाय एकैकां [4]वनकाष्ठिकां गुहादीपनार्थं दिने दिने प्रक्षिपति । न च ते मूर्खा उलूका विजानन्ति, यदेष कुलायमस्मद्दाहाय वृद्धिं नयति । अथवा साध्विदमुच्यते—

अमित्रं कुरुते मित्रं मित्रं द्वेष्टि हिनस्ति च ।
शुभं वेत्त्यशुभं पापं भद्रं दैवहतो नरः ॥ २१७ ॥

अथ [5]कुलायव्याजेन दुर्गद्वारे कृते काष्ठनिचये संजाते सूर्योदयेऽन्धतां प्राप्तेषूलूकेषु सत्सु स्थिरजीवी शीघ्रं गत्वा मेघवर्ण-

---

१ आत्मानं अनुयान्ति ये ते आत्मानुयायिनः, स्वानुचराः, त एव परिवारास्तैरनुगतः युक्तः । २ सुखघात्याः—सुखेन अक्लेशेन वध्याः सञ्जाता इत्यर्थः । ३ निजावासस्थाने । ४ वनकाष्ठिकां अरण्यस्य क्षुद्रं काष्ठमित्यर्थः । ५ नीडवृद्धिच्छलेन ।

माह—'स्वामिन्, [१]दाहसाध्या कृता रिपुगुहा । तत्सपरिवारः समेत्यैकैकां वनकाष्ठिकां ज्वलन्तीं गृहीत्वा गुहाद्वारेऽस्मत्कुलाये प्रक्षिप, येन सर्वे शत्रवः [२]कुम्भीपाकनरकप्रायेण दुःखेन म्रियन्ते । तच्छ्रुत्वा प्रहृष्टो मेघवर्ण आह–'तात, कथयात्मवृत्तान्तम् । चिराद्य दृष्टोऽसि ।' स आह—'वत्स, नायं कथनस्य कालः । यतः कदाचित्तस्य रिपोः कश्चि[३]त्प्रणिधिर्ममेहागमनं निवेदयिष्यति, तज्ज्ञानादन्धोऽन्यत्रापसरणं करिष्यति । तत्त्वर्यताम् । उक्तं च—

शीघ्रकृत्येषु कार्येषु विलम्बयति यो नरः ।
तत्कृत्यं देवतास्तस्य कोपाद्विघ्नन्त्यसंशयम् ॥ २१८ ॥

तथा च—

यस्य यस्य हि कार्यस्य फलितस्य विशेषतः ।
क्षिप्रमक्रियमाणस्य कालः पिबति तत्फलम् ॥ २१९ ॥

तद् गुहायामायातस्य ते हतशत्रोः सर्वं सविस्तारं निर्व्याकुलतया[४] कथयिष्यामि ।' अथासौ तद्वचनमाकर्ण्य सपरिजन एकैकां ज्वलन्तीं वनकाष्ठिकां चञ्च्वग्रेण गृहीत्वा तद् गुहाद्वारं प्राप्य स्थिरजीविकुलाये प्राक्षिपत् । ततः सर्वे ते दिवान्धा रक्ताक्षवाक्यानि स्मरन्तो द्वारस्या[५]वृतत्वादनिःसरन्तो गुहामध्ये[६]कुम्भीपाकन्यायमापन्ना[७]मृताश्च । एवं शत्रून्निशेषतां नीत्वा भूयोऽपि मेघवर्णस्तदेव न्यग्रोधपादपदुर्गं जगाम । ततः सिंहासनस्थो भूत्वा सभामध्ये प्रमुदितमनाः स्थिरजीविनमपृच्छत्—

---

१ दाहेन जेतुं योग्या । २ यथा कुम्भीपाकनाम्ना प्रसिद्धे नरके नारकिणः पच्यन्ते तथा अग्निदाहेन शत्रवः अपि म्रियन्ते । ३ गुप्तचरः । ४ निःशङ्कतया । ५ पिहितत्वात् । ६ कुम्भीपाकनरकसमानदुःखमित्यर्थः । ७ आपत्तौ पतिताः ।

'तात, कथं त्वया शत्रुमध्ये गतेनैतावत्पर्यन्तं कालो नीतः । तदत्र कौतुकमस्माकं वर्तते । तत्कथ्यताम् । यतः—

वरमग्नौ प्रदीप्ते तु प्रपातः पुण्यकर्मणाम् ।
न चारिजनसंसर्गो मुहूर्तमपि सेवितः ॥ २२० ॥

तदाकर्ण्य स्थिरजीव्याह—'भद्र, आगामिफलवाञ्छया[1] कष्टमपि सेवको न जानाति । उक्तं च यतः—

उपनतभयैर्यो यो मार्गो हितार्थकरो भवे-
त्स स निपुणया बुद्ध्या सेव्यो महान्कृपणोऽपि वा ।
करिकरनिभौ ज्याघाताङ्कौ महार्थविशारदौ
रचितवलयैः स्त्रीवद्बद्धौ करौ हि किरीटिना ॥२२१॥
शक्तेनापि सदा नरेन्द्रविदुषा कालान्तरापेक्षिणा
वस्तव्यं खलु वाक्यवज्रविषमे क्षुद्रेऽपि पापे जने ।
दर्वीव्यग्रकरेण धूममलिनेनायाससयुक्तेन च
भीमेनातिबलेन मत्स्यभवने किं नोषितंसूदवत् ॥२२२॥
यद्वा तद्वा विषमपतितः साधु वा गर्हितं वा
कालापेक्षी हृदयनिहितं बुद्धिमान्कर्म कुर्यात् ।
किं गाण्डीवस्फुरदुरुघनास्फालनक्रूरपाणि-
र्नासील्लीलानटनविलसन्मेखली सव्यसाची ! ॥ २२३ ॥
सिद्धिं प्रार्थयता जनेन विदुषा तेजो निगृह्य स्वकं
सत्त्वोत्साहवतापि दैवविधिषु स्थैर्यं प्रकार्यं क्रमात् ।
देवेन्द्रद्रविणेश्वरान्तकसमैरप्यन्वितो भ्रातृभिः
किं क्लिष्टः सुचिरं त्रिदण्डमवहच्छ्रीमान्न धर्मात्मजः॥२२४॥
रूपाभिजनसंपन्नौ कुन्तीपुत्रौ बलान्वितौ ।
गोकर्मरक्षाव्यापारे विराटप्रेष्यतां गतौ ॥ २२५ ॥

---

१ आगामिनः फलस्य प्रत्याशया ।

रूपेणाप्रतिमेन यौवनगुणैः श्रेष्ठे कुले जन्मना ।
कान्त्या श्रीरिव यात्र सापि विदशां कालक्रमादागता ।
सैरन्ध्रीति सगर्वितं युवतिभिः साक्षेपमज्ञातया
द्रौपद्या ननु मत्स्यराजभवने घृष्टं न किं चन्दनम् ? ॥ २२६ ॥

मेघवर्ण आह—'तात ! [1]असिधाराव्रतमिदं मन्ये, यदरिणा सह संवासः ।' सोऽब्रवीत्—'देव, एवमेतत् । परं न तादृङ् मूर्खसमागमः क्वापि मया दृष्टः । न च महाप्रज्ञमनेकशास्त्रेष्वप्रतिमबुद्धिं रक्ताक्षं विना धीमान् । यत्कारणं तेन मदीयं यथास्थितं चित्तं ज्ञातम् । ये पुनरन्ये मन्त्रिणस्ते महामूर्खा [2]मन्त्रिमात्रव्यपदेशोपजीविनोऽतत्त्वकुशलाः, यैरिदमपि न ज्ञातम् । यतः—

अरितोऽभ्यागतो भृत्यो दुष्टस्तत्सङ्गतत्परः ।
अपसर्प्य स धर्मत्वान्नित्योद्वेगी च दूषितः ॥ २२७ ॥

आसने शयने याने पानभोजनवस्तुषु ।
दृष्ट्वादृष्टप्रमत्तेषु प्रहरन्त्यरयोऽरिषु ॥ २२८ ॥

तस्मात्सर्वप्रयत्नेन त्रिवर्गनिलयं बुधः ।
आत्मानमादृतो रक्षेत्प्रमादाद्धि विनश्यति ॥ २२९ ॥

साधु चेदमुच्यते—

संतापयन्ति कमपथ्यभुजं न रोगाः ?
दुर्मन्त्रिणं कमुपयान्ति न नीतिदोषाः ?।
कं श्रीर्न दर्पयति ? कं न निहन्ति मृत्युः ?
कं स्त्रीकृता न विषयाः परिपीडयन्ति ? ॥ २३० ॥

---

१ असिधाराव्रतम्—असिधारोपरिस्थितौ यथा शरीरच्छेदो अवश्यं भवति तथैव शत्रूणां मध्ये स्थितावपि मृत्युः अवश्यं भवतीति भावः ।
२ मन्त्रिमात्रमेव व्यपदेशः प्रसिद्धिः, तेन उपजीवन्तीति तथोक्ताः ।

लुब्धस्य नश्यति यशः पिशुनस्य मैत्री
नष्टक्रियस्य कुलमर्थपरस्य धर्मः ।
विद्याफलं व्यसनिनः कृपणस्य सौख्यं
राज्यं प्रमत्तसचिवस्य नराधिपस्य ॥ २३१ ॥

तद्राजन्, असिधाराव्रतं मयाचरितमरिसंसर्गादिति यद्भवतोक्तं, तन्मया साक्षादेवानुभूतम् । उक्तं च—

अपमानं पुरस्कृत्य मानं कृत्वा तु पृष्ठतः ।
स्वार्थमभ्युद्धरेत्प्राज्ञः स्वार्थभ्रंशो हि मूर्खता ॥ २३२ ॥
स्कन्धेनापि वहेच्छत्रुं कालमासाद्य बुद्धिमान् ।
महता कृष्णसर्पेण मण्डूका बहवो हताः' ॥ २३३ ॥

मेघवर्ण आह—'कथमेतत् ।' स्थिरजीवी कथयति—

## कथा ( १५ )

अस्ति वरुणाद्रिसमीप एकस्मिन्प्रदेशे [1]परिणतवया मन्दविषो नाम कृष्णसर्पः । स एवं चित्ते संचिन्तितवान्—'कथं नाम मया सुखोपायवृत्त्या [2]वर्तितव्यम्' इति । ततो बहुमण्डूकं ह्रदमुपगम्य [3]धृतिपरीतमिवात्मानं दर्शितवान् । अथ तथा स्थिते तस्मिन्नुदकप्रान्तगतेनैकेन मण्डूकेन पृष्टः—'माम,[4] किमद्य यथापूर्वमाहारार्थं न विहरसि ।' सोऽब्रवीत्—'भद्र, कुतो मे मन्दभाग्यस्याहाराभिलाषः । यत्कारणमद्य रात्रौ प्रदोष एव मयाहारार्थं विहरमाणेन दृष्ट एको मण्डूकः । तद्ग्रहणार्थं मया[5]क्रमः सज्जितः । सोऽपि मां दृष्ट्वा मृत्युभयेन [6]स्वाध्यायप्रसक्तानां ब्राह्मणानामन्तरमपक्रान्तो न [7]विभावितो

१ वृद्धः । २ जीवितव्यम् । ३ धैर्यव्याप्तमिव । ४ मातुल । ५ उद्योगः कृतः । ६ वेदपाठरतानाम् । ७ लक्षितः ।

मया क्वापि गतः । [1]तत्सदृशमोहितचित्तेन मया कस्यचिद् ब्राह्मणस्य सूनोर्ह्रदतटजलान्तःस्थोऽङ्गुष्ठो दष्टः । ततोऽसौ सपदि पञ्चत्वमुपागतः । अथ तस्य पित्रा दुःखितेनाहं शप्तः । 'यथा दुरात्मन्, त्वया निरपराधो मत्सुतो दष्टः । तदनेन दोषेण त्वं मण्डूकानां वाहनं भविष्यसि । तत्प्रसादलब्धजीविकया वर्तिष्यसे' इति । ततोऽहं युष्माकं वाहनार्थमागतोऽस्मि ।' तेन च सर्वमण्डूकानामिदमावेदितम् । ततस्तैः प्रहृष्टमनोभिः सर्वैरेव गत्वा जलपादनाम्नो दर्दुरराजस्य विज्ञप्तम् । अथासावपि मन्त्रिपरिवृतोऽत्यद्भुतमिदमिति मन्यमानः ससंभ्रमं ह्रदादुत्तीर्य मन्दविषस्य फणिनः फणाप्रदेशमधिरूढः । शेषा अपि [2]यथाज्येष्ठं तत्पृष्ठोपरि समारुरुहुः । किं बहुना । तदुपरि स्थानमप्राप्तवन्तस्तस्यानुपदं[3] धावन्ति । मन्दविषोऽपि तेषां तुष्ट्यर्थमनेकप्रकारान्गतिविशेषानदर्शयत् । जलपादो लब्धतदङ्गसंस्पर्शसुखस्तमाह—

'न तथा करिणा यानं तुरगेण रथेन वा ।
नरयानेन वा यानं यथा मन्दविषेण मे' ॥ २३४ ॥

अथान्येद्युर्मन्दविषश्छद्मना मन्दं मन्दं विसर्पति । तच्च दृष्ट्वा जलपादोऽब्रवीत् भद्र मन्दविष, यथापूर्वं किमद्य साधु नोह्यते । मन्दविषोऽब्रवीत्—'देव, [4]अद्याहारवैकल्यान्न मे वोढुं शक्तिरस्ति ।' अथासावब्रवीत्—भद्र, भक्षय क्षुद्रमण्डूकान् ।' तच्छ्रुत्वा प्रहर्षितसर्वगात्रो मन्दविषः ससंभ्रममब्रवीत्—'ममायमेव विप्रशापोऽस्ति । तत्त्वानेनानुज्ञावचनेन प्रीतोऽस्मि ।' ततोऽसौ नैरन्तर्येण मण्डूकान्भक्षयन्कतिपयैरेवाहोभिर्बलवान्संवृत्तः । प्रहृष्टश्चान्तर्लीनमवहस्येदमब्रवीत् ।

१ तस्य मण्डूकस्य सदृशं (यद् अङ्गुष्ठं) तेन मोहितं भ्रान्तिमाप्तं चित्तं यस्य तेन । २ प्रधानानुसारेण । ३ पश्चात् । ४ भोजनाभावात् ।

'मण्डूका विविधा ह्येते छलपूर्वोपसाधिताः।
कियन्तं कालमक्षीणा भवेयुः खादिता मम' ॥ २३५ ॥

जलपादोऽपि मन्दविषेण [1]कृतकवचनव्यामोहितचित्तः किमपि नावबुध्यते। अत्रान्तरेऽन्यो महाकायः कृष्णसर्पस्तमुद्देशं समायातः। तं च मण्डूकैर्वाह्यमानं दृष्ट्वा विस्मयमगमत्, आह च—'वयस्य, यदस्माक[2]मशनं तैः कथं वाह्यसे। विरुद्धमेतत्।' मन्दविषोऽब्रवीत्—

सर्वमेतद्विजानामि यथा वाह्योऽस्मि दर्दुरैः।
किंचित्कालं प्रतीक्षेऽहं घृतान्धो ब्राह्मणो यथा' ॥२३६॥

सोऽब्रवीत्—'कथमेतत्।' मन्दविषः कथयति—

## कथा ( १६ )

अस्ति कस्मिंश्चिदधिष्ठाने यज्ञदत्तो नाम ब्राह्मणः। तस्य भार्या पुंश्चल्यन्यासक्तमना अजस्रं विटाय सखण्डघृतान्घृतपूरा न्कृत्वा भर्तुश्चौरिकया प्रयच्छति। अथ कदाचिद्भर्ता दृष्ट्वाब्रवीत्—'भद्रे, किमेतत्परिदृश्यते। कुत्र वाजस्रं नयसीदम्। कथय सत्यम्।' सा चोत्पन्नप्रतिभा[3] कृतकवचनैर्भर्तारमब्रवीत्—'अस्त्यत्र नातिदूरे भगवत्या देव्या आयतनम्। तत्राहमुपोषिता सती बलिं भक्ष्यविशेषांश्चापूर्वान्नयामि।' अथ तस्य पश्यतो गृहीत्वा तत्सकलं देव्यायतनाभिमुखी प्रतस्थे। यत्कारणं देव्या निवेदितेनानेन मदीयो भर्तैवं मंस्यते यन्मम ब्राह्मणी भगवत्याः कृते भक्ष्यविशेषान्नित्यमेव नयतीति। अथ देव्यायतने गत्वा स्नानार्थं नद्यामवतीर्य यावत्स्नानक्रियां करोति, तावद्भर्तान्यमा-

१ कृतकवचनेन कपटवचनेन व्यामोहितं विकृतिमापन्नं चित्तं यस्य सः।
२ भोजनम्। ३ प्रत्युत्पन्नमतिः।

गान्तरेणागत्य देव्याः पृष्ठतोऽदृश्योऽवतस्थे । अथ सा ब्राह्मणी स्नात्वा देव्यायतनमागत्य स्नानानुलेपनमाल्यधूपबलिक्रिया-दिकं कृत्वा देवीं प्रणम्य व्यजिज्ञपत्—'भगवति, केन प्रकारेण मम भर्तान्धो भविष्यति ।' तच्छ्रुत्वा [1]स्वरभेदेन देवीपृष्ठस्थितो ब्राह्मणो जगाद—'यदि त्वमजस्रं घृतपूरादि भक्ष्यं तस्मै भर्त्रे प्रयच्छसि, ततः शीघ्रमन्धो भविष्यति ।' सा तु [2]बन्धकी कृत-कवचनवञ्चितमानसा तस्मै ब्राह्मणाय तदेव नित्यं प्रददौ । अथान्येद्युर्ब्राह्मणेनाभिहितम्—'भद्रे, नाहं सुतरां पश्यामि ।' तच्छ्रुत्वा चिन्तितमनया—'देव्याः प्रसादोऽयं प्राप्तः' इति । अथ तस्या हृदयवल्लभो विटस्तत्सकाशमन्धीभूतोऽयं ब्राह्मणः किं मम करिष्यतीति निःशङ्कः प्रतिदिनमभ्येति । अथान्येद्युस्तं प्रवि-शन्तमभ्यासगतं[3] दृष्ट्वा केशैर्गृहीत्वा लगुडपार्ष्णिप्रभृतिप्रहारै-स्तावदताडयत्, यावदसौ पञ्चत्वमाप । तामपि दुष्टपत्नीं छिन्न-नासिकां कृत्वा विससर्ज । अतोऽहं ब्रवीमि—'सर्वमेतद्विजाना-मि' इति । अथ मन्दविषोऽन्तर्लीनमवहस्य पुनरपि "मण्डूका विविधा ह्येते" इति तमेवमब्रवीत् । अथ जलपादस्तच्छ्रुत्वा सुतरां व्यग्रहृदयः किमनेनाभिहितम्' इति सम्यङ्नावगम्य तमपृच्छत्—'भद्र, किं त्वयाभिहितमिदं विरुद्धं वचः?। अथासावा कारप्रच्छादनार्थं[4] 'न किञ्चित्' इत्यब्रवीत् । तथैव कृतकवच-नव्यामोहितचित्तो जलपादस्तस्य [5]दुष्टाभिसंधिं नावबुध्यते । किं बहुना । तथा तेन सर्वेऽपि भक्षिता यथा बीजमात्रमपि नावशिष्टम् । अतोऽहं ब्रवीमि—'स्कन्धेनापि वहेच्छत्रुम्' इति अथ राजन्, यथा मन्दविषेण बुद्धिबलेन मण्डूका निहताः, तथा मयापि सर्वेऽपि वैरिण इति । साधु चेदमुच्यते—

१ कृत्रिमं स्वरं विधाय । २ कुलटा । ३ समीपस्थितम् । ४ भाव-गोपनार्थम् । ५ दुष्टमाशयम् ।

वने प्रज्वलितो वह्निर्दहन्मूलानि रक्षति ।
समूलोन्मूलनं कुर्याद्वायुर्यो मृदुशीतलः ॥ २३७ ॥

मेघवर्ण आह—'तात, सत्यमेवैतत् ये महात्मानो भवन्ति ते महासत्त्वा आपद्गता अपि प्रारब्धं न विसर्जयन्ति। उक्तं च यतः—

महत्त्वमेतन्महतां नयालंकारधारिणाम् ।
न मुञ्चन्ति यदारब्धं कृच्छ्रेऽपि व्यसनोदये ॥ २३८ ॥

तथा च—

प्रारभ्यते न खलु विघ्नभयेन नीचैः
प्रारभ्य विघ्नविहता विरमन्ति मध्याः ।
विघ्नैः सहस्रगुणितैरपि हन्यमानाः
प्रारब्धमुत्तमगुणा न परित्यजन्ति ॥ २३९ ॥

तत्कृतं निष्कण्टकं मम राज्यं शत्रून्निःशेषतां नयता त्वया । अथवा युक्तमेतन्नयवेदिनाम् । उक्तं च यतः—

ऋणशेषं चाग्निशेषं शत्रुशेषं तथैव च ।
व्याधिशेषं च निःशेषं कृत्वा प्राज्ञो न सीदति' ॥ २४० ॥

सोऽब्रवीत्—'देव, भाग्यवांस्त्वमेवासि, यस्यारब्धं सर्वमेव संसिध्यति । तन्न केवलं शौर्यं कृत्यं साधयति, किंतु प्रज्ञया यत्क्रियते तदेव विजयाय भवति । उक्तं च यतः—

शस्त्रैर्हता न हि हता रिपवो भवन्ति
प्रज्ञाहतास्तु रिपवः सुहता भवन्ति ।
शस्त्रं निहन्ति पुरुषस्य शरीरमेकं
प्रज्ञा कुलं च विभवं च यशश्च हन्ति ॥ २४१ ॥

तदेवं प्रज्ञापुरुषकाराभ्यां युक्तस्यायत्नेन कार्यसिद्धयः संभवन्ति । उक्तञ्च—

प्रसरति मतिः कार्यारम्भे दृढीभवति स्मृतिः
स्वयमुपनयन्नर्थान्मन्त्रो न गच्छति विप्लवम् ।
स्फुरति सफलस्तर्कश्चित्तं समुन्नतिमश्नुते
भवति च रतिः श्लाघ्ये कृत्ये नरस्य भविष्यतः ॥२४२॥

तथा च नयत्यागशौर्यसंपन्ने पुरुषे राज्यमिति । उक्तं च—

त्यागिनि शूरे विदुषि च संसर्गरुचिर्जनो गुणी भवति ।
गुणवति धनं धनाच्छ्रीः श्रीमत्याज्ञा ततो राज्यम् ॥ २४३ ॥

मेघवर्ण आह—'नूनं सद्यःफलानि नीतिशास्त्राणि, यत्त्वया-नुकूल्येनानुप्रविश्यारिमर्दनः सपरिजनो निःशेषितः । स्थिरजीव्याह—

तीक्ष्णोपायप्राप्तिगम्योऽपि योऽर्थ-
स्तस्याप्यादौ संश्रयः साधुयुक्तः ।
उत्तुङ्गाग्रः सारभूतो वनानां
मान्याभ्यर्च्यश्छिद्यते पादपेन्द्रः ॥ २४४ ॥

अथवा स्वामिन्, किं तेनाभिहितेन यदनन्तरकाले क्रिया-रहितमसुखसाध्यं वा भवति । साधु चेदमुच्यते—

अनिश्चितैरध्यवसानभीरुभिः
पदे पदे दोषशतानुदर्शिभिः ।
फलैर्विसंवादमुपागता गिरः
प्रयान्ति लोके परिहासवस्तुताम् ॥ २४५ ॥

न च लघुष्वपि कर्तव्येषु धीमद्भिरनादरः कार्यः । यतः—

शक्ष्यामि कर्तुमिदमल्पमयत्नसाध्य-
मत्रादरः क इति कृत्यमुपेक्षमाणाः ।
केचित्प्रमत्तमनसः परितापदुःख-
मापत्प्रसङ्गसुलभं पुरुषाः प्रयान्ति ॥ २४६ ॥

तदत्र जितारेर्मद्भिर्भोर्यथापूर्वं निद्रालाभो भविष्यति । उच्यते चैतत्—

निःसर्पे बद्धसर्पे वा भवने सुप्यते सुखम् ।
सदा दृष्टभुजङ्गे तु निद्रा दुःखेन लभ्यते ॥ २४७ ॥

तथा च—

विस्तीर्णव्यवसायसाध्यमहतां स्निग्धोपभुक्ताशिषां
कार्याणां नयसाहसोन्नतिमतामिच्छापदारोहिणाम् ।
मानोत्सेकपराक्रमव्यसनिनः पारं न यावद्गताः
सामर्षे हृदयेऽवकाशविषया तावत्कथं निर्वृतिः ॥२४८॥

तदवसितकार्यारम्भस्य विश्राम्यतीव मे हृदयम् । तदिदमधुना निहतकण्टकं राज्यं प्रजापालनतत्परो भूत्वा पुत्रपौत्रादिक्रमेणाचलच्छत्रासनश्रीश्चिरं भुङ्क्ष्व । अपि च—

प्रजा न रञ्जयेद्यस्तु राजा रक्षादिभिर्गुणैः ।
अजागलस्तनस्येव तस्य राज्यं निरर्थकम् ॥ २४९ ॥

गुणेषु रागो व्यसनेष्वनादरो
रतिः सुभृत्येषु च यस्य भूपतेः ।
चिरं स भुङ्क्ते चलचामरांशुकां
सितातपत्राभरणां नृपश्रियम् ॥ २५० ॥

न च त्वया प्राप्तराज्योऽहमिति मत्वा श्रीमदेनात्मा व्यंसयितव्यः[1] यत्कारणं चला हि राज्ञो विभूतयः, [2]वंशारोहणवद्राज्यलक्ष्मीर्दुरारोहा, [3]क्षणविनिपातरता प्रयत्नशतैरपि धार्यमाणा दुर्धरा, [4]प्रशस्ताराधिताप्यन्ते [5]विप्रलम्भिनी, वानरजातिरिव [6]विद्रुतानेकचित्ता, पद्मपत्रोदकमिवाघटितसंश्लेषा, पवनगति-

१ प्रतारयितव्यः । २ वंशे आरोहणं यथा दुःसाध्यम् । ३ क्षणेन क्षणमात्रेण विनिपातः विध्वंसनं तत्र रता । ४ प्रशस्तेन योग्येन आराधिताऽपि सेविताऽपि । ५ प्रतारणकारिणी । ६ विद्रुतं चञ्चलितं अनेकेषां चित्तं यया सा ।

रिवातिचपला, अनार्यसंगतमिवास्थिरा, आशीविष इव दुरुपचारा, संध्याभ्रलेखेव मुहूर्तरागा, जलबुद्बुदावलीव स्वभावभङ्गुरा, शरीरप्रकृतिरिव कृतघ्ना, स्वप्नलब्धद्रव्यराशिरिव क्षणदृष्टनष्टा ।

अपि च—

यदैव राज्ये क्रियतेऽभिषेक-
स्तदैव बुद्धिर्व्यसनेषु योज्या ।
घटा हि राज्ञामभिषेककाले
सहाम्भसेवापदमुद्गिरन्ति ॥ ॥ २५१ ॥

न च कश्चिदनधिगमनीयो नामास्त्यापदाम् । उक्तं च—

रामस्य व्रजनं बलेर्नियमनं पाण्डोः सुतानां वनं
वृष्णीनां निधनं नलस्य नृपते राज्यात्परिभ्रंशनम् ।
नाट्याचार्यकमर्जुनस्य पतनं सञ्चिन्त्य लङ्केश्वरे
सर्वं कालवशाज्जनोऽत्र सहते कः कं परित्रायते ॥ २५२ ॥

क्व स दशरथः स्वर्गे भूत्वा महेन्द्रसुहृद्गतः
क्व स जलनिधेर्वेलां बद्ध्वा नृपः सगरस्तथा ।
क्व स करतलाज्जातो वैन्यः क्व सूर्यतनुर्मनु-
र्ननु बलवता कालेनैते प्रबोध्य निमीलिताः ॥ २५३ ॥

मान्धाता क्व गतस्त्रिलोकविजयी राजा क्व सत्यव्रतो
देवानां नृपतिर्गतः क्व नहुषः सच्छास्त्रवान्केशवः ।
मन्यन्ते सरथाः सकुञ्जरवराः शक्रासनाध्यासिनः
कालेनैव महात्मना त्वनुकृताः कालेन निर्वासिताः ॥२५४॥

अपि च—

स च नृपतिस्ते सचिवास्ताः प्रमदास्तानि काननवनानि ।
स च ते च ताश्च तानि कृतान्तदृष्टानि नष्टानि ॥ २५५ ॥

एवं मत्तकरिकर्णचञ्चलां राज्यलक्ष्मीमवाप्य न्यायैकनिष्ठो भूत्वोपभुङ्क्ष्व ॥

इति काकोलूकीयं तृतीयं तन्त्रं समाप्तम् ।

# लब्धप्रणाशम्*

अथेदमारभ्यते लब्धप्रणाशं नाम चतुर्थं तन्त्रम्। यस्यायमादिमः श्लोकः—

समुत्पन्नेषु कार्येषु बुद्धिर्यस्य न हीयते।
स एव दुर्गं तरति जलस्थो वानरो यथा॥ १॥

तद्यथानुश्रूयते—अस्ति कस्मिंश्चित्समुद्रोपकण्ठे[1] महाञ्जम्बूपादपः सदाफलः[2]। तत्र च रक्तमुखो नाम वानरः प्रतिवसति स्म। तत्र च तस्य तरोरधः कदाचित्करालमुखो[3] नाम मकरः समुद्रसलिलान्निष्क्रम्य [4]सुकोमलवालुकासनाथे तीरोपान्ते [5]न्यविशत। ततश्च रक्तमुखेन स प्रोक्तः—'भोः, भवान्समभ्यागतोऽतिथिः। तद्भक्षयतु मया दत्तान्यमृततुल्यानि जम्बूफलानि। उक्तं च—

'प्रियो वा यदि वा द्वेष्यो मूर्खो वा यदि पण्डितः।
वैश्वदेवान्तमापन्नः सोऽतिथिः स्वर्गसंक्रमः॥ २॥
न पृच्छेच्चरणं गोत्रं न च विद्यां कुलं न च।
अतिथिं वैश्वदेवान्ते श्राद्धे च मनुरब्रवीत्॥ ३॥

---

* लब्धस्य अधिगतस्य प्रणाशो विद्यते यस्मिन् तन्त्रे तत् लब्धप्रणाशम्। प्राप्तम् अपि वस्तु कथं विनश्यति इत्येतत्प्रतिपादकमित्यर्थः।

१ समुद्रोपकण्ठे समुद्रसमीपे। २ सदा सर्वदा फलतीति सदाफलः, अविरतफलद इत्यर्थः। ३ करालमुखः करालं भयङ्करं मुखं यस्य तथाभूतः। ४ सुकोमल सुकोमलेति मृदुला या बालुका तया सनाथे समन्विते तीरोपान्ते तीरप्रदेशे। ५ न्यविशत अवास्थित।

दूरमार्गश्रमश्रान्तं वैश्वदेवान्तमागतम् ।
अतिथिं पूजयेद्यस्तु स याति परमां गतिम् ॥ ४ ॥
अपूजितोऽतिथिर्यस्य गृहाद्याति विनिश्वसन् ।
गच्छन्ति विमुखास्तस्य पितृभिः सह देवताः ॥ ५ ॥

एवमुक्त्वा तस्मै जम्बूफलानि ददौ । सोऽपि तानि भक्षयित्वा तेन सह चिरं गोष्ठीसुखमनुभूय भूयोऽपि स्वभवनमगात् । एवं नित्यमेव तौ वानरमकरौ जम्बूच्छायास्थितौ विविधशास्त्रगोष्ठ्या कालं नयन्तौ सुखेन तिष्ठतः । सोऽपि मकरो भक्षितशेषाणि जम्बूफलानि गृहं गत्वा स्वपत्न्याः प्रयच्छति । अथान्यतमे दिवसे तया स पृष्टः—'नाथ, क्वैवंविधान्यमृतफलानि प्राप्नोषि ।' स आह—'भद्रे, ममास्ति परमसुहृद्रक्तमुखो नाम वानरः । स प्रीतिपूर्वमिमानि फलानि प्रयच्छति ।' अथ तयाभिहितम्—'यः सदैवामृतप्रायाणीदृशानि फलानि भक्षयति तस्य हृदयममृतमयं भविष्यति । तद्यदि मया भार्यया ते प्रयोजनम्, ततस्तस्य हृदयं मह्यं प्रयच्छ । येन तद्भक्षयित्वा जरामरणरहिता त्वया सह भोगान्भुनज्मि ।' स आह—'भद्रे, मा मैवं वद । यतः स[1]प्रतिपन्नोऽस्माकं भ्राता । अपरं फलदाता । ततो व्यापादयितुं न शक्यते । तत्त्यजैनं मिथ्याग्रहम् । उक्तं च—

एकं प्रसूयते माता द्वितीयं वाक्प्रसूयते ।
वाग्जातमधिकं प्रोचुः सोदर्यादपि बन्धुवत्' ॥ ६ ॥

अथ मकर्याह—'त्वया कदाचिदपि मम वचनं नान्यथा कृतम् ।

तन्नूनं सा वानरी भविष्यति, यतस्तया अनुरागतः सकलमपि दिनं तत्र गमयसि । तत्त्वं ज्ञातो मया सम्यक् । यतः—

१ प्रतिपन्नः अङ्गीकृतः ।

साह्लादं वचनं प्रयच्छसि न मे, नो वाञ्छितं किंचन
प्रायः प्रोच्छ्वसिषि द्रुतं हुतवहज्वालासमं रात्रिषु ।
कण्ठाश्लेषपरिग्रहे शिथिलता यन्नादराच्चुम्बसे
तत्ते धूर्त हृदि स्थिता प्रियतमा काचिन्ममेवापरा' ॥७॥

सोऽपि पत्न्याः [1]पादोपसंग्रहं कृत्वाङ्कोपरि निधाय तस्याः [2]कोपकोटिमापन्नायाः [3]सुदीनमुवाच—

'मयि ते पादपतिते किंकरत्वमुपागते ।
त्वं प्राणवल्लभे कस्मात्कोपने कोपमेष्यसि' ॥ ८ ॥

सापि तद्वचनमाकर्ण्याश्रुप्लुतमुखी[4] तमुवाच—

'सार्धं मनोरथशतैस्तव धूर्त कान्ता
सैव स्थिता मनसि कृत्रिमभावरम्या ।
अस्माकमस्ति न कथंचिदिहावकाश-
स्तस्मात्कृतं चरणपातविडम्बनाभिः ॥ ९ ॥

अपरं सा यदि तव वल्लभा न भवति, तत्किं मया भणितेऽपि तां न व्यापादयसि । अथ यदि स वानरस्तत्कस्तेन सह तव स्नेहः । तत्किं बहुना । यदि तस्य हृदयं न भक्षयामि, तर्हि मया [5]प्रायोपवेशनं कृतं विद्धि ।' एवं तस्यास्तं निश्चयं ज्ञात्वा चिन्ता-व्याकुलितहृदयः सः प्रोवाच । अथवा साध्विदमुच्यते—

---

१ पादोपसङ्ग्रहं पादयोः चरणयोः उपसङ्ग्रहं धारणम् । २ कोपकोटिमापन्नायाः कोपस्य क्रोधस्य कोटिं प्रकर्षम् आधिक्यम् इति यावत् आपन्नायाः प्राप्तायाः । ३ सुदीनम् अतिकातरं यथा तथा । ४ अश्रुप्लुतमुखी अश्रुणा नेत्रजलेन प्लुतं व्याप्तं मुखं यस्याः सा । ५ प्रायोपवेशनं भोजनम् अकृत्वा प्राणान् त्यक्ष्यामि इति सङ्कल्प्य अनशनव्रत-ग्रहणं निश्चितमित्यर्थः ।

वज्रलेपस्य मूर्खस्य नारीणां कर्कटस्य च ।
एको ग्रहस्तु मीनानां नीलीमद्यपयोस्तथा ॥ १० ॥

'तत्किं करोमि । कथं स मे वध्यो भवति ।' इति विचिन्त्य वानरपार्श्वमगमत् । वानरोऽपि चिरादायान्तं तं सोद्वेगमवलोक्य प्रोवाच—'भो मित्र, किमद्य चिरवेलायां समायातोऽसि । कस्मात्साह्लादं नालपसि । न सुभाषितानि पठसि ।' स आह—'मित्र, अहं तव भ्रातृजायया निष्ठुरतरैर्वाक्यैरभिहितः—'भोः कृतघ्न ! मा मे त्वं स्वमुखं दर्शय, यतस्त्वं प्रतिदिनं मित्रमुपजीवसि[1] । न च तस्य पुनः प्रत्युपकारं गृहदर्शनमात्रेणापि करोषि । तत्ते प्रायश्चित्तमपि नास्ति । उक्तं च—

ब्रह्मघ्ने च सुरापे च चौरे भग्नव्रते शठे ।
निष्कृतिर्विहिता सद्भिः कृतघ्ने नास्ति निष्कृतिः ॥ ११ ॥

तत्त्वं मम देवरं गृहीत्वाद्य प्रत्युपकारार्थं गृहमानय । नो चेत्त्वया सह मे परलोके दर्शनम्' इति । तदहं तयैवं प्रोक्तस्तव सकाशमागतः । तदद्य तया सह त्वदर्थं कलहायतो[2] मम इयती[3] वेला विलग्ना । तदागच्छ मे गृहम् । तव भ्रातृपत्नी [4]रचितचतुष्का [5]प्रगुणितवस्त्रमणिमाणिक्याद्युचिताभरणा [6]द्वारदेशबद्धवन्दनमाला सोत्कण्ठा तिष्ठति ।' मर्कट आह—'भो मित्र, युक्तमभिहितं मद्भ्रातृपत्न्या । उक्तं च—

१ मित्राद् उपकृतो भवसि । २ कलहायतः कलहम् आचरतः । ३ इयती एतावती । ४ रचितचतुष्का रचितं सज्जितं चतुष्कं चतुःस्तम्भयुतं मण्डपं तवोपवेशनार्थमितिभावः यया तथाभूता । ५ प्रगुणितवस्त्रेति प्रगुणितानि प्रकृष्टगुणवन्ति बहुमूल्यानीत्यर्थः यानि वस्त्र-मणि-माणिक्यादीनि तान्येव उचितानि उपयुक्तानि आभरणानि भूषणानि यस्याः सा । उचितविविधवस्त्रालङ्कारादिभिर्भूषितेत्यर्थः । ६ द्वारदेशेति द्वारदेशे बद्धा वन्दनमाला तोरणस्रक् यया तथाभूता ।

वर्जयेत्कौलिकाकारं मित्रं प्राज्ञतरो नरः ।
आत्मनः संमुखं नित्यं य आकर्षति लोलुपः ॥ १२ ॥

तथा च—

ददाति प्रतिगृह्णाति गुह्यमाख्याति पृच्छति ।
भुङ्क्ते भोजयते चैव षड्विधं प्रीतिलक्षणम् ॥ १३ ॥

परं वयं वनचराः, युष्मदीयं च जलान्ते गृहम् । तत्कथं शक्यते तत्र गन्तुम् । तस्मात्तामपि मे भ्रातृपत्नीमत्रानय येन प्रणम्य तस्या आशीर्वादं गृह्णामि ।' स आह—'भो मित्र, अस्ति[1] समुद्रान्तरे सुरम्ये [2]पुलिनप्रदेशेऽस्मद्गृहम् । तन्मम पृष्ठमारूढः सुखेनाकृतभयो[3] गच्छ ।' सोऽपि तच्छ्रुत्वा सानन्दमाह—'भद्र, यद्येवं तत्किं विलम्ब्यते । त्वर्यताम् । एषोऽहं तव पृष्ठमारूढः ।', तथानुष्ठितेऽगाधे जलधौ गच्छन्तं मकरमालोक्य भयत्रस्तमना वानरः प्रोवाच—'भ्रातः, शनैः शनैर्गम्यताम् । [4] जलकल्लोलैः प्लाव्यते मे शरीरम् ।' तदाकर्ण्य मकरश्चिन्तयामास—'असावगाधं जलं प्राप्तो मे वशः संजातः । मत्पृष्ठगतस्तिलमात्रमपि चलितुं न शक्नोति । तस्मात्कथयाम्यस्य निजाभिप्रायम्, येनाभीष्टदेवतास्मरणं करोति । आह च—'मित्र, त्वं मया वधाय समानीतो भार्यावाक्येन विश्वास्य । तत्स्मर्यतामभीष्टदेवता ।' स आह—भ्रातः, किं मया तस्यास्तवापि चापकृतं येन मे वधोपायश्चिन्तितः ।' मकर आह 'भोः, तस्यास्तावत्तव हृदयस्यामृतमयफलरसास्वादनमृष्टस्य[5] भक्षणे [6]दोहदः संजातः । तेनैतदनुष्ठितम्, प्रत्युत्पन्नमतिर्वानर आह—

---

१ समुद्रान्तरे समुद्रमध्ये । २ पुलिनप्रदेशे जलोत्थितभूमौ । ३ अकृतभयः निर्भय इत्यर्थः । ४ जलकल्लोलैः जलतरङ्गैः । ५ अमृतेति । अमृतमयम् अमृतसमानं यत् फलं जम्बूफलं तस्य निरन्तरं रसास्वादेन रसानुभवेन मृष्टस्य शुद्धस्य । ६ दोहदः लालसा ।

'भद्र, यद्येवं तत्किं त्वया मम तत्रैव न व्याहृतम् । येन स्वहृदयं [1]जम्बूकोटरे सदैव मया [2]सुगुप्तं कृतम्, तद्भ्रातृपत्न्या अर्पयामि । त्वयाहं शून्यहृदयोऽत्र कस्मादानीतः ।' तदाकर्ण्य मकरः सानन्दमाह—'भद्र, यद्येवं तदर्पय मे हृदयम् । येन सा दुष्टपत्नी तद्भक्षयित्वानशनादुत्तिष्ठति । अहं त्वां तमेव जम्बूपादपं प्रापयामि ।' एवमुक्त्वा निवर्त्य जम्बूतलमगात् । वानरोऽपि कथमपि [3]जल्पितविविधदेवतोपचारपूजस्तीरमासादितवान् । ततश्च [4]दीर्घतरचङ्क्रमणेन तमेव जम्बूपादपमारूढश्चिन्तयामास—'अहो, लब्धास्तावत्प्राणाः । अथवा साध्विदमुच्यते—

न विश्वसेदविश्वस्ते विश्वस्तेऽपि न विश्वसेत् ।
विश्वासाद्भयमुत्पन्नं मूलान्यपि निकृन्तति ॥ १४ ॥

तन्ममैतदद्य पुनर्जन्मदिनमिव संजातम् ।' इति चिन्तयमानं मकर आह—'भो मित्र, अर्पय तद् हृदयं यथा ते भ्रातृपत्नी भक्षयित्वानशनादुत्तिष्ठति ।' अथ विहस्य निर्भर्त्सयन्वानरस्तमाह—'धिग्धिङ्मूर्ख विश्वासघातक, किं कस्यचिद् हृदयद्वयं भवति । तदाशु गम्यतां जम्बूवृक्षस्याधस्तान्न भूयोऽपि त्वयात्रागन्तव्यम् । उक्तं च यतः—

सकृद्दुष्टं च यो मित्रं पुनः संधातुमिच्छति ।
स मृत्युमुपगृह्णाति गर्भमश्वतरी यथा' ॥ १५ ॥

तच्छ्रुत्वा मकरः सविलक्षं चिन्तितवान्—'अहो, मयातिमूढेन किमस्य स्वचित्ताभिप्रायो निवेदितः तद्यद्यसौ पुनरपि

---

१ जम्बू-कोटरे जम्बूवृक्षरन्ध्रे । २ सुगुप्तं सुरक्षितम् । ३ जल्पितः "यदि कथमपि अहमस्मात् प्राणसंकटादुत्तीर्णो भविष्यामि तदा" हे भगवति !, हे भगवन् ! हे नारायण !, हे कुलदेवते !, यथाविधि अहं पूजयिष्यामीति मनसि चिन्ततः विविधानां बहूनां देवानां, उपचारः पूजा च येन सः । ४ अत्यधिकोड्डयनेन ।

कथंचिद्विश्वासं गच्छति, तद्भूयोऽपि विश्वासयामि ' आह च—'मित्र, हास्येन मया तेऽभिप्रायो लब्धः । तस्या न किंचित्तव हृदयेन प्रयोजनम् । तदागच्छ [1]प्राघुणिकन्यायेनास्मद्गृहम् । तव भ्रातृपत्नी सोत्कण्ठा वर्तते ।' वानर आह—'भो दुष्ट, गम्यताम् । अधुना नाहमागमिष्यामि । उक्तं च—

बुभुक्षितः किं न करोति पापं
क्षीणा जना निष्करुणा भवन्ति ।
आख्याहि भद्रे प्रियदर्शनस्य
न गङ्गदत्तः पुनरेति कूपम्' ॥ १६ ॥

मकर आह—'कथमेतत् ।' स आह—

## कथा ( १ )

कस्मिश्चित्कूपे गङ्गदत्तो नाम मण्डूकराजः प्रतिवसति स्म । स कदाचिद्दायादै[2]रुद्वेजितोऽ[3]रघट्टघटीमारुह्य निष्क्रान्तः । अथ तेन चिन्तितम्—'यत्कथं तेषां दायादानां मया प्रत्यपकारः कर्तव्यः । उक्तञ्च—

आपदि येनापकृतं येन च हसितं दशासु विषमासु ।
अपकृत्य तयोरुभयोः पुनरपि जातं नरं मन्ये' ॥ १७ ॥

एवं चिन्तयन्बिले प्रविशन्तं कृष्णसर्पमपश्यत् । तं दृष्ट्वा भूयोऽप्यचिन्तयत्—'यदेनं तत्र कूपे नीत्वा सकलदायादानामुच्छेदं करोमि । उक्तं च—

---

१ प्राघुणिकन्यायेन-अभ्यागतरूपेण । २ दायादैः दायं पैतृकं धनम् आददते गृह्णन्ति इति दायादाः तैः बन्धुभिरित्यर्थः । ३ अरघट्टघटी कूपस्योपरि जलनिष्कासनसाधनीभूतोभयपार्श्वस्थस्तम्भोपरि दृढकाष्ठदण्डस्थितयन्त्रसम्बद्धं क्षुद्रघटम् ।

शत्रुभिर्योजयेच्छत्रुं बलिना बलवत्तरम् ।
स्वकार्याय यतो न स्यात्काचित्पीडात्र तत्क्षये ॥ १८ ॥

तथा च—

शत्रुमुन्मूलयेत्प्राज्ञस्तीक्ष्णं तीक्ष्णेन शत्रुणा ।
व्यथाकरं सुखार्थाय कण्टकेनेव कण्टकम्' ॥ १९ ॥

एवं स विभाव्य बिलद्वारं गत्वा तमाहूतवान्—'एह्येहि प्रियदर्शन, एहि ।' तच्छ्रुत्वा सर्पश्चिन्तयामास—'य एष मामाह्वयति स स्वजातीयो न भवति । यतो नैषा सर्पवाणी । अन्येन केनापि सह मम मर्त्यलोके संधानं नास्ति । तदत्रैव दुर्गे स्थितस्तावद्वेद्मि कोऽयं भविष्यति । उक्तं च—

यस्य न ज्ञायते शीलं न कुलं न च संश्रयः ।
न तेन संगतिं कुर्यादित्युवाच बृहस्पतिः ॥ २० ॥

कदाचित्कोऽपि मन्त्रवाद्यौषधचतुरो वा मामाहूय बन्धने क्षिपति । अथवा कश्चित्पुरुषो वैरमाश्रित्य, कस्यचिद्भक्षणार्थे मामाह्वयति ।' आह च—'भोः, को भवान् ।' स आह—'अहं गङ्गदत्तो नाम मण्डूकाधिपतिस्त्वत्सकाशे मैत्र्यर्थमभ्यागतः । तच्छ्रुत्वा सर्प आह 'भोः, अश्रद्धेयमेतत्, यत्तृणानां वह्निना सह संगमः । उक्तं च—

यो यस्य जायते वध्यः स स्वप्नेऽपि कथंचन ।
न तत्समीपमभ्येति तत्किमेवं प्रजल्पसि' ॥ २१ ॥

गङ्गदत्त आह—'भोः, सत्यमेतत् । स्वभाववैरी त्वमस्माकम् परं परपरिभवात्प्राप्तोऽहं ते सकाशम् । उक्तं च—

सर्वनाशे च संजाते प्राणानामपि संशये ।
अतिशत्रुं प्रणम्यापि रक्षेत्प्राणान्धनानि च' ॥ २२ ॥

सर्प आह—'कथय कस्मात्ते परिभवः ।' साह—'दायादेभ्यः ।' सोऽप्याह—'क ते आश्रयो वाप्यां कूपे तडागे ह्रदे वा । तत्कथय स्वाश्रयम् ।' तेनोक्तम्—पाषाणचयनिबद्धे कूपे ।' सर्प आह—'अहो, [1]अपदा वयम् । तन्नास्ति तत्र मे प्रवेशः । प्रविष्टस्य च स्थानं नास्ति । यत्र स्थितस्तव दायादान्व्यापादयामि । तद्गम्यताम् । उक्तं च—

यच्छक्यं ग्रसितुं यस्य ग्रस्तं परिणमेच्च यत् ।
हितं च परिणामे यत्तदाद्यं भूतिमिच्छता' ॥ २३ ॥

गङ्गदत्त आह—'भोः, समागच्छ त्वम् । अहं सुखोपायेन तत्र तव प्रवेशं कारयिष्यामि । तथा तस्य मध्ये जलोपान्ते रम्यतरं कोटरमस्ति । तत्र स्थितस्त्वं [2]लीलया दायादान्व्यापादयिष्यसि । तच्छ्रुत्वा सर्पो व्यचिन्तयत्—'अहं तावत्परिणतवयाः[3], कदाचित्कथंचिन्मूषकमेकं प्राप्नोमि । तत्सुखावहो जीवनोपायोऽयमनेन [4]कुलाङ्गारेण मे दर्शितः । तद्गत्वा तान्मण्डूकान्भक्षयामि' इति । अथवा साध्विदमुच्यते—

यो हि प्राणपरिक्षीणः सहायपरिवर्जितः ।
स हि सर्वसुखोपायां वृत्तिमारचयेद्बुधः' ॥ २४ ॥

एवं विचिन्त्य तमाह—'भो गङ्गदत्त, यद्येवं तदग्रे भव । येन तत्र गच्छावः ।' गङ्गदत्त आह—'भोः प्रियदर्शन, अहं त्वां सुखोपायेन तत्र नेष्यामि, स्थानं च दर्शयिष्यामि । परं त्वयास्मत्परिजनो रक्षणीयः । केवलं यानहं तव दर्शयिष्यामि त एव भक्षणीयाः' इति । सर्प आह—'सांप्रतं त्वं मे मित्रं जातम् । तन्न भेतव्यम् । तव वचनेन भक्षणीयास्ते दायादाः ।

१ अपदाः चरणहीनाः । २ विनाप्रयासेन, सुखेनेत्यर्थः । ३ वृद्धः । ४ वंशक्षयकारिणा ।

एवमुक्त्वा बिलान्निष्क्रम्य तमालिङ्ग्य च तेनैव सह प्रस्थितः । अथ कूपमासाद्यारघट्टघटिकामार्गेण सर्पस्तेनात्मना स्वालयं नीतः । ततश्च गङ्गदत्तेन कृष्णसर्पं कोटरे धृत्वा दर्शितास्ते दायादाः । ते च तेन शनैः शनैर्भक्षिताः । अथ मण्डूकाभावे सर्पेणाभिहितम्—'भद्र, निःशेषितास्ते रिपवः । तत्प्रयच्छान्यन्मे किंचिद्भोजनम् । यतोऽहं त्वयात्रानीतः । गङ्गदत्त आह—'भद्र, कृतं त्वया मित्रकृत्यम् । तत्सांप्रतमनेनैव घटिकायन्त्रमार्गेण गम्यताम्' इति । सर्प आह—भो गङ्गदत्त; न सम्यगभिहितं त्वया । कथमहं तत्र गच्छामि । मदीयबिलदुर्गमन्येन रुद्धं भविष्यति । तस्मादत्रस्थस्य मे मण्डूकमेकैकं स्ववर्गीयं प्रयच्छ । नो चेत्सर्वानपि भक्षयिष्यामि इति । तच्छ्रुत्वा गङ्गदत्तो व्यचिन्तयत्—'अहो, किमेतन्मया कृतं सर्पमानयता । तद्यदि निषेधयिष्यामि तत्सर्वानपि भक्षयिष्यति । अथवा युक्तमुच्यते—

योऽमित्रं कुरुते मित्रं वीर्याभ्यधिकमात्मनः ।
स करोति न संदेहः स्वयं हि विषभक्षणम् ॥ २५ ॥

तत्प्रयच्छाम्यस्यैककं प्रतिदिनं सुहृदम् । उक्तं च—

सर्वस्वहरणे युक्तं शत्रुं बुद्धियुता नराः ।
तोषयन्त्यल्पदानेन वाडवं सागरो यथा ॥ २६ ॥

तथा च—

यो दुर्बलोऽणूनपि याच्यमानो
बलीयसा यच्छति नैव साम्ना ।
प्रयच्छते नैव च दर्श्यमानं
खारीं स चूर्णस्य पुनर्ददाति ॥ २७ ॥

तथा च—

सर्वनाशे समुत्पन्ने अर्द्धं त्यजति पण्डितः ।
अर्द्धेन कुरुते कार्यं सर्वनाशो हि दुस्तरः ॥ २८ ॥
न स्वल्पस्य कृते भूरि नाशयेन्मतिमान्नरः ।
एतदेव हि पाण्डित्यं यत्स्वल्पाद्भूरिरक्षणम्' ॥ २९ ॥

एवं निश्चित्य नित्यमेकैकं तमादिशति । सोऽपि तं भक्षयित्वा तस्य परोक्षेऽन्यानपि भक्षयति । अथवा साध्विदमुच्यते—

यथा हि मलिनैर्वस्त्रैर्यत्र तत्रोपविश्यते ।
एवं चलितवित्तस्तु वित्तशेषं न रक्षति ॥ ३० ॥

अथान्यदिने तेनापरान्मण्डूकान्भक्षयित्वा गङ्गदत्तसुतो यमुनादत्तो भक्षितः । तं भक्षितं मत्वा गङ्गदत्तस्तारस्वरेण धिग्धिग् इति प्रलापपरः कथंचिदपि न विरराम । ततः स्वपत्न्याभिहितः—

'किं क्रन्दसि दुराक्रन्द स्वपक्षक्षयकारक ।
स्वपक्षस्य क्षये जाते को नस्त्राता भविष्यति ॥ ३१ ॥

तदद्यापि विचिन्त्यतामात्मनो [1]निष्क्रमणम्, अस्य वधोपायं च । अथ गच्छता कालेन सकलमपि [2]कवलितं मण्डूककुलम् । केवलमेको गङ्गदत्तस्तिष्ठति । ततः प्रियदर्शनेन भणितम्—'भो गङ्गदत्त' बुभुक्षितोऽहम् । निःशेषिताः सर्वे मण्डूकाः । तद्दीयतां मे किंचिद्भोजनं यतोऽहं त्वयात्रानीतः ।' स आह—'भो मित्र, न त्वयात्र विषये मयावस्थितेन कापि चिन्ता कार्या । तद्यदि मां प्रेषयसि ततोऽन्यकूपस्थानपि मण्डूकान्विश्वास्यात्रानयामि ।' स आह—'मम तावत्त्वमभक्ष्यो भ्रातृस्थाने । तद्यद्येवं करोषि तत्सांप्रतं पितृस्थाने भवसि । तदेवं क्रियताम्' इति । सोऽपि

---

१ निर्गमनम् । २. भक्षितम् ।

तदाकर्ण्यारघट्टघटिकामाश्रित्य [1]विविधदेवतोपकल्पितपूजोपयाचितस्तस्मात्कूपाद्विनिष्क्रान्तः । प्रियदर्शनोऽपि तदाकाङ्क्षया तत्रस्थः प्रतीक्षमाणस्तिष्ठति । अथ चिरादनागते गङ्गदत्ते प्रियदर्शनोऽन्यकोटरनिवासिनीं गोधामुवाच—'भद्रे क्रियतां स्तोकं साहाय्यम् । यतश्चिरपरिचितस्ते गङ्गदत्तः । तद्गत्वा तत्सकाशं कुत्रचिज्जलाशयेऽन्विष्य मम संदेशं कथय येनागम्यतामेकाकिनापि भवता द्रुततरं यद्यन्ये मण्डूका नागच्छन्ति । अहं त्वया विना नात्र वस्तुं शक्नोमि । तथा यद्यहं तव विरुद्धमाचरामि तत्सुकृतमन्तरे मया विधृतम् ।' गोधापि तद्वचनाद्गङ्गदत्तं द्रुततरमन्विष्याह—'भद्र गङ्गदत्त, स तव सुहृत्प्रियदर्शनस्तव मार्गं समीक्षमाणस्तिष्ठति । तच्छीघ्रमागम्यतामिति । अपरञ्च तेन तव [2]विरुद्धकरणे सुकृतमन्तरे धृतम् । तन्निःशङ्केन मनसा समागम्यताम् ।' तदाकर्ण्य गङ्गदत्त आह—

बुभुक्षितः किं न करोति पापं
क्षीणा नरा निष्करुणा भवन्ति ।
आख्याहि भद्रे प्रियदर्शनस्य
न गङ्गदत्तः पुनरेति कूपम् ॥ ३२ ॥

एवमुक्त्वा स तां विसर्जयामास । तद्भो दुष्टजलचर, अहमपि गङ्गदत्त इव त्वद्गृहे न कथंचिदपि यास्यामि ।' तच्छ्रुत्वा मकर आह—'भो मित्र, नैतद्युज्यते । सर्वथैव मे कृतघ्नतादोषमपनय मद्गृहागमनेन । अथवात्राहमनशनात्प्राणत्यागं तवोपरि करिष्यामि ।' वानर आह—'मूढ, किमहं लम्बकर्णो मूर्खः । दृष्टापायोऽपि स्वयमेव तत्र गत्वात्मानं व्यापादयामि ।

१ विविधाभ्यः अनेकाभ्यः देवताभ्यः उपकल्पिता मनसि चिन्तिता या पूजा तया उपयाचितं आत्मरक्षणार्थं प्रार्थितं सर्पादात्मनः परित्राणं येन तथाभूतः, कृतप्रार्थन इत्यर्थः । २ विरुद्धकरणे विरुद्धाचरणे ।

आगतश्च गतश्चैव दृष्ट्वा सिंहपराक्रमम् ।
अकर्णहृदयो मूर्खो यो गत्वा पुनरागतः' ॥ ३३ ॥

मकर आह—'भद्र, स को लम्बकर्णः । कथं दृष्टापायोऽपि मृतः । तन्मे निवेद्यताम् ।' वानर आह—

## कथा ( २ )

कस्मिंश्चिद्वनोद्देशे करालकेसरो नाम सिंहः प्रतिवसति स्म । तस्य च धूसरको नाम शृगालः सदैवानुयायी परिचारकोऽस्ति अथ कदाचित्तस्य हस्तिना सह युध्यमानस्य शरीरे गुरुतरः प्रहाराः संजाताः, यैः पदमेकमपि चलितुं न शक्नोति । तस्याचलनाच्च धूसरकः क्षुत्क्षामकण्ठो दौर्बल्यं गतः । अन्यस्मिन्नहनि तमवोचत्—'स्वामिन्, बुभुक्षया पीडितोऽहम् ।' पदात्पदमपि चलितुं न शक्नोमि । तत्कथं ते शुश्रूषां करोमि ।' सिंह आह—'भोः, गच्छ । अन्वेषय किंचित्सत्त्वम् , येनेमामवस्थां गतोऽपि व्यापादयामि ।' तदाकर्ण्य शृगालोऽन्वेषयन्कञ्चित्समीपवर्तिनं ग्राममासादितवान् । तत्र लम्बकर्णो नाम गर्दभस्तडागोपान्ते[१] [२]प्रविरलदूर्वाङ्कुरान्कृच्छ्रादास्वादयन्दृष्टः । ततश्च समीपवर्तिना भूत्वा तेनाभिहितः—' माम, नमस्कारोऽयं मदीयः संभाव्यताम् । चिराद्दृष्टोऽसि । तत्कथय किमेवं दुर्बलतां गतः । स आह—'भो भगिनीपुत्र, किं कथयामि । रजकोऽतिनिर्दयोऽतिभारेण मां पीडयति । घासमुष्टिमपि न प्रयच्छति । केवलं दूर्वाङ्कुरान्धूलिमिश्रितान्भक्षयामि । तत्कुतो मे शरीरे पुष्टिः ।' शृगाल आह—'माम, यद्येवं तदस्ति [३]मरकतसदृश-

१ तडागनिकटे । २ प्रविरलदूर्वाङ्कुरान् प्रविरलाः स्वल्पाः ये दूर्वाणाम् अङ्कुरास्तान् । ३ मरकतैः हरिन्मणिभिः सदृशः शष्पप्रायः कोमलतृणबहुलः ।

शष्पप्रायो [1]नदीसनाथो रमणीयतरः प्रदेशः। तत्रागत्य मया सह सुभाषितगोष्ठीसुखमनुभवंस्तिष्ठ।' लम्बकर्ण आह—'भो भगिनीसुत, युक्तमुक्तं भवता। परं वयं ग्राम्याः पशवोऽरण्यचारिणां वध्याः। तत्किं तेन भव्यप्रदेशेन'। शृगाल आह—'माम, मैवं वद। [2]मद्भुजपञ्जरपरिरक्षितः स देशः। तत्रास्ति कश्चिदपरस्य तत्र प्रवेशः। परमनेनैव दोषेण [3]रजककदर्थितास्तत्र तिस्रो रासभ्योऽनाथाः सन्ति। ताश्च पुष्टिमापन्ना यौवनोत्कटा इदं मामूचुः—'यदि त्वमस्माकं सत्यो मातुलस्तदा किंचिद्ग्रामान्तरं गत्वास्मद्योग्यं कंचित्पतिमानय। तदर्थं त्वामहं तत्र नयामि।' अथ शृगालवचनानि श्रुत्वा कामपीडिताङ्गस्तमवोचत्—'भद्र, यद्येवं तदग्रे भव, येनागच्छामि।' अथवा साध्विदमुच्यते—

नामृतं न विषं किंचिदेकां मुक्त्वा नितम्बिनीम्।
यस्याः सङ्गेन जीव्येत म्रियते च वियोगतः ॥ ३४ ॥

तथा च—

यासां नाम्नापि कामः स्यात्संगमं दर्शनं विना।
तासां दृक्संगमं प्राप्य यन्न द्रवति कौतुकम् ॥ ३५ ॥

तथानुष्ठिते शृगालेन सह सिंहान्तिकमागतः। सिंहोऽपि व्यथाकुलितस्तं दृष्ट्वा यावत्समुत्तिष्ठति, तावद्रासभः पलायितुमारब्धवान्। अथ तस्य पलायमानस्य सिंहेन [4]तलप्रहारो दत्तः। स च मन्दभाग्यस्य व्यवसाय इव व्यर्थतां गतः। अत्रान्ते शृगालः कोपाविष्टस्तमुवाच—'भोः, किमेवंविधः प्रहारस्ते। यद्गर्दभोऽपि तव पुरतो बलाद्गच्छति। तत्कथं

१ नदीसहितः। २ मद्भुजेति-मम भुजौ एव पञ्जरस्तेन परिरक्षितः कृतरक्षः। ३ रजकेति-रजकेन कदर्थिताः क्लेशिताः। ४ तलप्रहारः मुखे चपेटाघातः।

गजेन सह युद्धं करिष्यसि,तद्दृष्टं ते बलम् ।' अथ विलक्षस्मितं सिंह आह—'भोः, किमहं करोमि । मया [1]न क्रमः सज्जीकृत आसीत् । अन्यथा गजोऽपि मत्क्रमाक्रान्तो न गच्छति ।' शृगाल आह—'अद्याप्येकवारं तवान्तिके तमानेष्यामि । परं त्वया सज्जीकृतक्रमेण स्थातव्यम् ।' सिंह आह—'भद्र, यो मां प्रत्यक्षं दृष्ट्वा गतः स पुनः कथमत्रागमिष्यति । तदन्यत्किमपि सत्त्वमन्विष्यताम् ।' शृगाल आह—'किं तवानेन व्यापारेण । त्वं केवलं सज्जितक्रमस्तिष्ठ ।' तथानुष्ठिते शृगालोऽपि यावद्रासभमार्गेण गच्छति, तावत्तत्रैव स्थाने चरन्दृष्टः । अथ शृगालं दृष्ट्वा रासभः प्राह—'भो भगिनीसुत, शोभनस्थाने त्वयाहं नीतः । [2]द्राङ् मृत्युवशं गतः । तत्कथय किं तत्सत्त्वम्, यस्या[3]तिरौद्रवज्रसदृशकरप्रहारादहं मुक्तः । तच्छ्रुत्वा प्रहसञ्शृगाल आह—भद्र रासभी त्वामायान्तं दृष्ट्वा सानुरागमालिङ्गितुं समुत्थिता । त्वं च कातरत्वान्नष्टः[4]। सा पुनर्न शक्ता त्वां विना स्थातुम् । तया तु नश्यतस्तेऽवलम्बनार्थं हस्तः क्षिप्तः । नान्यकारणेन । तदागच्छ । सा त्वत्कृते [5]प्रायोपवेशनोपविष्टा तिष्ठति । एतद्वदति—'यल्लम्बकर्णो यदि मे भर्ता न भवति तदहमग्नौ जले वा प्रविशामि । न पुनस्तस्य वियोगं सोढुं शक्नोमि' इति । तत्प्रसादं कृत्वा तत्रागम्यताम् । नो चेत्तव स्त्रीहत्या भविष्यति । अपरं भगवान्कामः कोपं तवोपरि करिष्यति । उक्तं च—

स्त्रीमुद्रां मकरध्वजस्य जयिनीं सर्वार्थसंपत्करीं
ये मूढाः प्रविहाय यान्ति कुधियो मिथ्याफलान्वेषिणः ।

१ उद्योगः न प्रारब्धः । २ झटिति, सहसेत्यर्थः । ३ अतिरौद्रः अतिभयङ्करः वज्रसदृशः यः करस्तस्य प्रहारात् आघातात् । ४ नष्टः पलायितः । ५ प्रायोपवेशना त्यक्तभोजननियमा ।

ते तेनैव निहत्य निर्दयतरं नग्नीकृता मुण्डिताः
केचिद्रक्तपटीकृताश्च जटिलाः कापालिकाश्चापरे' ॥३६॥

अथासौ तद्वचनं श्रद्धयतया श्रुत्वा भूयोऽपि तेन सह प्रस्थितः। साध्विदमुच्यते—

जानन्नपि नरो दैवात्प्रकरोति विगर्हितम् ।
कर्म किं कस्यचिल्लोके गर्हितं रोचते कथम् ॥ ३७ ॥

अत्रान्तरे सज्जितक्रमेण सिंहेन स लम्बकर्णो व्यापादितः। ततस्तं हत्वा शृगालं रक्षकं निरूप्य स्वयं स्नानार्थं नद्यां गतः। शृगालेनापि [1]लौल्यौत्सुक्यात्तस्य कर्णहृदयं भक्षितम् । अत्रान्तरे सिंहो यावत्स्नात्वा कृतदेवार्चनः प्रतर्पितपितृगणः समायाति तावत्कर्णहृदयरहितो रासभस्तिष्ठति। तं दृष्ट्वा कोपपरीतात्मा सिंहः शृगालमाह—पाप, किमिदमनुचितं कर्म समाचरितम् । यत्कर्णहृदयभक्षणेनायमुच्छिष्टतां नीतः ।' शृगालः सविनयमाह—'स्वामिन्, मा मैवं वद। कर्णहृदयरहित एवायं रासभ आसीत्, येनेहागत्य त्वामवलोक्य भूयोऽप्यागतः।' अथ तद्वचनं श्रद्धेयं मत्वा सिंहस्तेनैव सह संविभज्य निःशङ्कितमनास्तं भक्षितवान् । अतोऽहं ब्रवीमि— 'आगतश्च गतश्चैव' इति। तन्मूर्ख ?, कपटं कृतं त्वया। परं युधिष्ठिरेणेव सत्यवचनेन विनाशितम् । अथवा साध्विदमुच्यते—

'स्वार्थमुत्सृज्य यो दम्भी सत्यं ब्रूते सुमन्दधीः ।
स स्वार्थाद् भ्रश्यते नूनं युधिष्ठिर इवापरः' ॥ ३८ ॥

मकर आह—'कथमेतत् ।' स आह—

१ लौल्यौत्सुक्यात् अतिलोभपरवशत्वात् ।

# कथा ( ३ )

कस्मिंश्चिदधिष्ठाने कुम्भकारः प्रतिवसति स्म । स कदाचित्प्र[1]मादादर्धभग्नघटखर्परतीक्ष्णाग्रस्योपरि महता वेगेन धावन्पतितः । ततः [2]खर्परकोट्या पाटितललाटो [3]रुधिरप्लाविततनुः कृच्छ्रादुत्थाय स्वाश्रयं गतः । [4]ततश्चापथ्यसेवनात्स प्रहारस्तस्य [5]करालतां गतः, कृच्छ्रेण च नीरोगतां नीतः । अथ कदाचिद् दुर्भिक्षपीडिते देशे स कुम्भकारः क्षुत्क्षामकण्ठः कैश्चिद्राजसेवकैः सह देशान्तरं गत्वा कस्यापि राज्ञः सेवको बभूव । स च राजा तस्य ललाटे विकरालं प्रहारक्षतं दृष्ट्वा चिन्तयामास—'यद्वीरः पुरुषः कश्चिदयं नूनम् । तेन ललाटपट्टे संमुखप्रहारः । अतस्तं संमानादिभिः सर्वेषां राजपुत्राणां मध्ये विशेषप्रसादेन पश्यति स्म । तेऽपि राजपुत्रास्तस्य तं [6]प्रसादातिरेकं पश्यन्तः परमीर्ष्याधर्मं वहन्तो राजभयान्न किंचिदूचुः । अथान्यस्मिन्नहनि तस्य भूपतेर्वीर[7]संभावनायां क्रियमाणायां,[8]विग्रहे समुपस्थिते,[9]प्रकल्प्यमानेषु गजेषु, [10]संनह्यमानेषु वाजिषु, योधेषु [11]प्रगुणीक्रियमाणेषु, तेन भूभुजा स कुम्भकारः[12]प्रस्तावानुगतं पृष्टो निर्जने—'भो राजपुत्र, किं ते नाम । का च जातिः । कस्मिन्संग्रामे प्रहारोऽयं ते ललाटे लग्नः । स आह—'देव, नायं शस्त्रप्रहारः । युधिष्ठिराभिधः कुलालोऽहं, प्रकृत्या मद्गेहेऽनेकखर्पराण्यासन् । अथ

१ प्रमादात् अनवधानात् अर्धं भग्नः यः घटः तस्य यः खर्परः खण्डः, तस्य यत्तीक्ष्णं निशितं अग्रं तस्य । २ खर्परस्य अग्रभागेन । ३ रुधिरेति-रुधिरेण प्लाविता तनुर्यस्य सः । ४ कुपथ्यकरणात् । ५ भयङ्करत्वम् । ६ अनुग्रहातिशयम् । ७ वीरसम्भावनायां "अयं वीरो न वा" इति परीक्षायाम् । ८ संग्रामे । ९ सज्ज्यमानेषु । १० उद्युज्यमानेषु । ११ प्रगुणीक्रियमाणेषु समरसुदक्षीक्रियमाणेषु । १२ प्रसङ्गसङ्गतम् ।

कदाचन्मद्यपानं कृत्वा निर्गतः प्रधावन्खर्परोपरि पतितः । तस्य प्रहारविकारोऽयं मे ललाट एवं विकरालतां गतः ।' तदाकर्ण्य राजा सव्रीडमाह—'अहो, वञ्चितोऽहं राजपुत्रानुकारिणानेन कुलालेन । तद्दीयतां द्रागेतस्य चन्द्रार्धः ।' तथानुष्ठिते कुम्भकार आह—'मा मैवं कुरु । पश्य मे रणे हस्तलाघवम् ।' राजा प्राह—'भोः, सर्वगुणसंपन्नो भवान् । तथापि गम्यताम् । उक्तं च—

शूरश्च कृतविद्यश्च दर्शनीयोऽसि पुत्रक ।
यस्मिन्कुले त्वमुत्पन्नो गजस्तत्र न हन्यते' ॥ ३९ ॥

कुलाल आह—'कथमेतत् ।' राजा कथयति—

## कथा (४)

कस्मिंश्चिदुद्देशे[1] सिंहदम्पती प्रतिवसतः स्म । अथ सिंही पुत्रद्वयमजीजनत् । सिंहोऽपि नित्यमेव मृगान्व्यापाद्य सिंह्यै ददाति । अथान्यस्मिन्नहनि तेन किमपि नासादितम् । येन भ्रमतोऽपि तस्य रविरस्तं गतः । अथ तेन स्वगृहमागच्छता शृगालशिशुः प्राप्तः । स च बालकोऽयमित्यवधार्य यत्नेन दंष्ट्रामध्यगतं कृत्वा सिंह्यै जीवन्तमेव समर्पितवान् । ततः सिंह्याऽभिहितम्—'भोः कान्त, त्वयानीतं किंचिदस्माकं भोजनम् ।' सिंह आह—'प्रिये, मयाद्यैनं शृगालशिशुं परित्यज्य न किंचित्सत्त्वमासादितम् । स च मया बालोऽयमिति मत्वा न व्यापादितो विशेषात्स्वजातीयश्च । उक्तं च—

स्त्रीविप्रलिङ्गिबालेषु प्रहर्तव्यं न कर्हिचित् ।
प्राणत्यागेऽपि संजाते विश्वस्तेषु विशेषतः ॥ ४० ॥

---

१ उद्देशे प्रदेशे ।

इदानीं त्वमेनं भक्षयित्वा पथ्यं कुरु । प्रभातेऽन्यत्किंचिदुपार्जयिष्यामि । सा प्राह—'भोः कान्त, त्वया बालकोऽयं विचिन्त्य न हतः । तत्कथमेनमहं स्वोदरार्थे विनाशयामि । उक्तं च—

अकृत्यं नैव कर्तव्यं प्राणत्यागेऽपि संस्थिते ।
न च कृत्यं परित्याज्यमेष धर्मः सनातनः ॥ ४१ ॥

तस्मान्ममायं तृतीयः पुत्रो भविष्यति ।' इत्येवमुक्त्वा तमपि स्वस्तनक्षीरेण परां पुष्टिमनयत् । एवं ते त्रयोऽपि शिशवः परस्परमज्ञातजातिविशेषा एकाचारविहारा बाल्यसमयं निर्वाहयन्ति । अथ कदाचित्तत्र वने भ्रमन्नरण्यगजः समायातः । तं दृष्ट्वा तौ सिंहसुतौ द्वावपि कुपिताननौ तं प्रति प्रचलितौ यावत्, तावत्तेन शृगालसुतेनाभिहितम्—'अहो गजोऽयं युष्मत्कुलशत्रुः । तन्न गन्तव्यमेतस्याभिमुखम् ।' एवमुक्त्वा गृहं प्रधावितः । तावपि ज्येष्ठबान्धवभङ्गान्निरुत्साहतां गतौ । साध्विदमुच्यते—

एकेनापि सुधीरेण सोत्साहेन रणं प्रति ।
सोत्साहं जायते सैन्यं भग्ने भङ्गमवाप्नुयात् ॥ ४२ ॥

तथा च—

अत एव हि वाञ्छन्ति भूपा योधान्महाबलान् ।
शूरान्वीरान्कृतोत्साहान्वर्जयन्ति च कातरान् ॥ ४३ ॥

अथ तौ द्वावपि गृहं प्राप्य पित्रोरग्रतो विहसन्तौ ज्येष्ठभ्रातृचेष्टितमूचतुः । यथा 'गजं दृष्ट्वा दूरतोऽपि नष्टः' । सोऽपि तदाकर्ण्य कोपाविष्टमनाः [1]प्रस्फुरिताधरपल्लवस्ताम्रलोचनः[2]त्रिशि-

---

१ प्रस्फुरितेति-प्रस्फुरिते अधरे पल्लवे इव यस्य तथाभूतः ।
२ ताम्रलोचनः-आरक्तनयनः ।

खां[1] भृकुटिं कृत्वा तौ निर्भर्त्सयन्परुषतरवचनान्युवाच । ततः सिंह्यैकान्ते नीत्वा प्रबोधितोऽसौ-'वत्स, मैवं कदाचिज्जल्प । भवदीयलघुभ्रातरावेतौ इति ।' अथासौ प्रभूतकोपाविष्टस्तामुवाच—'किमहमेताभ्यां शौर्येण रूपेण विद्याभ्यासेन कौशलेन वा हीनो येन मामुपहसतः ? । तन्मयावश्यमेतौ व्यापादनीयौ ।' तदाकर्ण्य सिंही तस्य जीवितमिच्छन्त्यन्तर्विहस्य प्राह—

'शूरोऽसि कृतविद्योऽसि दर्शनीयोसि पुत्रक ।
यस्मिन्कुले त्वमुत्पन्नो गजस्तत्र न हन्यते ॥ ४४ ॥

तत्सम्यक्शृणु वत्स । त्वं शृगालीसुतः कृपया मया स्वस्तनक्षीरेण पुष्टिं नीतः । तद्यावदेतौ मत्पुत्रौ शिशुत्वात्त्वां शृगालं न जानीतः, तावद् द्रुततरं गत्वा स्वजातीयानां मध्ये मिलितो भव । नो चेदाभ्यां हतो मृत्युपथं समेष्यसि ।' सोऽपि तद्वचनं श्रुत्वा [2]भयव्याकुलमनाः शनैः शनैरपसृत्य स्वजात्या मिलितः । तस्मात्त्वमपि यावदेते राजपुत्रास्त्वां कुलालं न जानन्ति, तावद् द्रुततरमपसर । नो चेदेतेषां सकाशाद्विडम्बनां प्राप्य मरिष्यसि ।' कुलालोऽपि तदाकर्ण्य सत्वरं प्रनष्टः । अतोऽहं ब्रवीमि—'स्वार्थमुत्सृज्य यो दम्भी' इति । धिङ् मूर्ख, यत्त्वया स्त्रियोऽर्थे एतत्कार्यमनुष्ठातुमारब्धम् । न हि स्त्रीणां कथश्चिद्विश्वासमुपगच्छेत् । उक्तं च—

यदर्थे स्वकुलं त्यक्तं जीविताधं च हारितम् ।
सा मां त्यजति निःस्नेहा कः स्त्रीणां विश्वसेन्नरः' ॥ ४५ ॥

मकर आह—'कथमेतत् ।' वानर आह—

१ त्रिशिखां-तिस्रः शिखा यस्यां सा तादृशीं, भालदेशस्य आकुञ्चनेन भृकुटिद्वयमध्ये त्रिशूलवद् दृश्यमानामित्यर्थः । २ भयसंत्रस्तान्तःकरणः ।

# कथा ( ५ )

अस्ति कस्मिंश्चिदधिष्ठाने कोऽपि ब्राह्मणः । तस्य च भार्या प्राणेभ्योऽप्यतिप्रियासीत् । सापि प्रतिदिनं कुटुम्बेन सह कलहं कुर्वाणा न विश्राम्यति । सोऽपि ब्राह्मणः कलहमसहमानो भार्यावात्सल्यात्स्वकुटुम्बं परित्यज्य ब्राह्मण्या सह [1]विप्रकृष्टं देशान्तरं गतः । अथ महाटवीमध्ये ब्राह्मण्याभिहितः—'आर्यपुत्र, तृष्णा मां बाधते । तदुदकं क्वाप्यन्वेषय ।', अथासौ तद्वचनानन्तरं यावदुदकं गृहीत्वा समागच्छति, तावत्तां मृतामपश्यत् । अति सौहार्देन अतिवल्लभतया विषादं कुर्वन्यावद्विलपति, तावदाकाशे वाचं शृणोति । तथा हि-'यदि ब्राह्मण, त्वं स्वकीयजीवितस्यार्धं ददासि ततस्ते जीवति ब्राह्मणी । तच्छ्रुत्वा ब्राह्मणेन शुचीभूय तिसृभिर्वाचाभिः स्वजीवतार्धं दत्तम् । वाक्समकेव च ब्राह्मणी जीविता सा । अथ तौ जलं पीत्वा वनफलानि भक्षयित्वा गन्तुमारब्धौ । ततः क्रमेण कस्यचिन्नगरस्य प्रदेशे पुष्पवाटिकां प्रविश्य ब्राह्मणो भार्यामभिहितवान्—'भद्रे' यावदहं भोजनं गृहीत्वा समागच्छामि तावदत्र त्वया स्थातव्यम् ।' इत्यभिधाय ब्राह्मणो नगरमध्ये जगाम । अथ तस्यां पुष्पवाटिकायां पङ्गुररघट्टं[2] खेलयन्दि [3]व्यगिरा गीतमुद्गिरति । तच्च श्रुत्वा [4]कुसुमेषुणार्दितया ब्राह्मण्या तत्सकाशं गत्वाभिहितम्—'भद्र, यदि मां न कामयसे तन्मत्सक्ता स्त्रीहत्या तव भविष्यति । पङ्गुरब्रवीत्—'किं व्याधिग्रस्तेन मया करिष्यसि ।' साब्रवीत्—'किमनेनोक्तेन । अवश्यं त्वया सह मया संगमः कर्तव्यः । तच्छ्रुत्वा तथा कृतवान् । सुरतानन्तरं साब्र-

१ दूरं । २ अरघट्टं कूपस्य उपरिनिबद्धं जलोत्तोलनार्थं काष्ठदण्डम् । खेलयन् हस्तेन क्षिपन् । ३ मधुरवचसा । ४ कामेन पीडितया ।

वीत्—'इतः प्रभृति यावज्जीवं मयात्मा भवते दत्तः । इति ज्ञात्वा भवानप्यस्माभिः सहागच्छतु ।' सोऽब्रवीत्—'एवमस्तु' अथ ब्राह्मणो भोजनं गृहीत्वा समागत्य तया सह भोक्तुमारब्धः। साब्रवीत्—'एष पङ्गुर्बुभुक्षितः । तदेतस्यापि कियन्तमपि ग्रासं देहि' इति । तथानुष्ठिते ब्राह्मण्याभिहितम्—'ब्राह्मण, सहायहीनस्त्वं यदा ग्रामान्तरं गच्छसि, तदा मम वचनसहायोऽपि नास्ति । तदेनं पङ्गुं गृहीत्वागच्छावः । सोऽब्रवीत्—'न शक्नोम्यात्मानमप्यात्मना वोढुम् । किं पुनरेनं पङ्गुम् ।' साब्रवीत्—[1]'पेटाभ्यन्तरस्थमेनमहं नेष्यामि ।' अथ [2]तत्कृतकवचनव्यामोहितचित्तेन तेन प्रतिपन्नम् । तथानुष्ठितेऽन्यस्मिन्दिने कूपोपकण्ठे विश्रान्तो ब्राह्मणस्तया च पङ्गुपुरुषासक्तया[3] संप्रेर्य कूपान्तः पातितः । सापि पङ्गुं गृहीत्वा कस्मिंश्चिन्नगरे प्रविष्टा । तत्र शुल्कचौर्यरक्षानिमित्तं राजपुरुषैरितस्ततो भ्रमद्भिस्तन्मस्तकस्था पेटा दृष्टा, बलादाच्छिद्य राजाग्रे नीता । राजा च यावत्तामुद्घाटयति, तावत्तं पङ्गुं ददर्श । ततः सा ब्राह्मणी विलापं कुर्वती राजपुरुषानुपदमेव तत्रागता । राज्ञा पृष्टा—'को वृत्तान्तः' इति । साब्रवीत्—'ममैष भर्ता व्याधिबाधितो दायादसमूहैरुद्वेजितो मया स्नेहव्याकुलितमानसया शिरसि कृत्वा भवदीयनगर आनीतः ।' तच्छ्रुत्वा राजाब्रवीत्—'ब्राह्मणि, त्वं मे भगिनी । ग्रामद्वयं गृहीत्वा भर्त्रा सह भोगान्भुञ्जाना सुखेन तिष्ठ ।' अथ स ब्राह्मणो दैववशात्केनापि साधुना कूपादुत्तारितः परिभ्रमंस्तदेव नगरमायातः । तया दुष्टभार्यया दृष्टो राज्ञे निवेदितः—'राजन्, अयं मम भर्तुर्वैरी समायातः, राज्ञापि वध आदिष्टः । सोऽ-

१ पेटाभ्यन्तरस्थं पेटकमध्यस्थितम् । २ कृतकेति-कृतकेन कपटेन वचनेन व्यामोहितं चित्तं यस्य तथाभूतेन । ३ सम्प्रेर्य-संचाल्य ।

ब्रवीत्—'देव, अनया मम सक्तं किंचिद् गृहीतमस्ति । यदि त्वं धर्मवत्सलः तद्दापय ।' राजाब्रवीत्—'भद्रे, यत्त्वयास्य सक्तं किंचिद् गृहीतमस्ति तत्समर्पय ।' सा प्राह—'देव, मया न किंचिद् गृहीतम् ।' ब्राह्मण आह—'यन्मया त्रिवाचिकं स्वजीवितार्धं दत्तम्, तद्देहि ।' अथ सा राजभयात्तत्रैव 'त्रिवाचिकमेव जीवितार्धमनेन दत्तम्' इति जल्पन्ती प्राणैर्विमुक्ता । ततः सविस्मयं राजाब्रवीत्—'किमेतत्' इति । ब्राह्मणेनापि पूर्ववृत्तान्तः सकलोऽपि तस्मै निवेदितः । अतोऽहं ब्रवीमि—'यदर्थे स्वकुलं त्यक्तम्' इति । वानरः पुनराह—'साधु चेदमुपाख्यानकं श्रूयते—

न किं दद्यान्न किं कुर्यात्स्त्रीभिरभ्यर्थितो नरः ।
अनश्वा य . ह्रेषन्ते शिरः पर्वणि मुण्डितम्' ॥ ४६ ॥

मकर आह—'कथमेतत् ।' वानरः कथयति—

## कथा (६)

अस्ति [1]प्रख्यातबलपौरुषो[2]ऽनेकनरेन्द्रमुकुटमरीचिजालजटिलीकृतपादपीठः [3]शरच्छशाङ्ककिरणनिर्मलयशाः समुद्रपर्यन्तायाः पृथिव्या भर्ता नन्दो नाम राजा । तस्य [4]सर्वशास्त्राधिगतसमस्ततत्त्वः सचिवो वररुचिर्नाम । तस्य च प्रणयकलहेन जाया कुपिता । सा चातीव वल्लभानेकप्रकारं परितोष्य-

---

१ प्रख्यातं प्रसिद्धं बलं सैन्यं पौरुषं पराक्रमश्च यस्य तथाभूतः । २ अनेकेषां नरेन्द्राणां मुकुटानां किरीटानां मरीचिजालैः प्रभापुञ्जैः जटिलीकृतं शबलीकृतं पादपीठं चरणासनं यस्य तथाभूतः । ३ शरदि यः शशाङ्कः शरच्छशाङ्कः शरत्कालीनश्चन्द्रः तस्य किरणवत् निर्मलं अमलं यशो यस्य सः । ४ सर्वशास्त्रेति–सर्वेषां शास्त्राणाम् अधिगतं ज्ञातं समस्तं सम्पूर्णं तत्त्वं येन तथाभूतः ।

माणापि न प्रसीदति । ब्रवीति च भर्ता—'भद्रे, येन प्रकारेण तुष्यसि तं वद । निश्चितं करोमि ।' ततः कथंचित्तयोक्तम्—'यदि शिरो मुण्डयित्वा मम पादयोः निपतसि, तदा प्रसादाभिमुखी भवामि ।' तथानुष्ठिते च सा प्रसन्नासीत् । अथ नन्दस्य भार्यापि तथैव रुष्टा प्रसाद्यमानाऽपि न तुष्यति । तेनोक्तम्—'भद्रे, त्वया विना मुहूर्तमपि न जीवामि । पादयोः पतित्वा त्वां प्रसादयामि ।' साब्रवीत्—'यदि [1]खलीनं मुखे प्रक्षिप्याहं तव पृष्ठे समारुह्य त्वां [2]धावयामि । धावितस्तु यद्यश्ववद् ह्रेषसे, तदा प्रसन्ना भवामि ।' राज्ञापि तथैवानुष्ठितम् । अथ प्रभातसमये सभायामुपविष्टस्य राज्ञः समीपे वररुचिरायातः । तं च दृष्ट्वा राजा प्रपच्छ 'भो वररुचे, कस्मिन् पर्वणि मुण्डितं शिरस्त्वया ।' सोऽब्रवीत्—

न किं दद्यान्न किं कुर्यात्स्त्रीभिरभ्यर्थितो नरः ।
अनश्वा यत्र ह्रेषन्ते शिरः पर्वणि मुण्डितम्' ॥ ४७ ॥

तद्भो दुष्टमकर, त्वमपि नन्दवररुचिवत्स्त्रीवश्यः । ततो भद्र ! आगतेन त्वया मां प्रति वधोपायप्रयासः प्रारब्धः, परं स्ववाग्दोषेणैव प्रकटीभूतः । अथवा साध्विदमुच्यते—

आत्मनो मुखदोषेण बध्यन्ते शुकसारिकाः ।
बकास्तत्र न बध्यन्ते मौनं सर्वार्थसाधनम् ॥ ४८ ॥

तथा च—

सुगुप्तं रक्ष्यमाणोऽपि दर्शयन्दारुणं वपुः ।
व्याघ्रचर्मप्रतिच्छन्नो वाक्कृते रासभो हतः' ॥ ४९ ॥

मकर आह—'कथमेतत् ।' वानरः कथयति—

---

१ खलीनम्-कविकां (घोड़े के मुख में लगाम के साथ जो लोहे का टुकड़ा दिया जाता है ।) २ शीघ्रं शीघ्रं चालयामि ।

# कथा ( ७ )

कस्मिंश्चिदधिष्ठाने शुद्धपटो नामः रजकः प्रतिवसति स्म । यस्य च गर्दभ एकोऽस्ति । सोऽपि घासाभावादतिदुर्बलतां गतः । अथ तेन रजकेनाटव्यां परिभ्रमता मृतव्याघ्रो दृष्टः । चिन्तितं च—'अहो, शोभनमापतितम् । अनेन व्याघ्रचर्मणा [1]प्रतिच्छाद्य रासभं रात्रौ यवक्षेत्रेषूत्सृजयामि । येन व्याघ्रं मत्वा समीपवर्तिनः क्षेत्रपाला एनं न निष्कासयिष्यन्ति । तथानुष्ठिते रासभो यथेच्छया यवभक्षणं करोति । प्रत्यूषे भूयोऽपि रजकः स्वाश्रयं नयति । एवं गच्छता कालेन स रासभः [2]पीवरतनुर्जातः । कृच्छ्राद् बन्धनस्थानमपि नीयते । अथान्यस्मिन्नहनि स मदोद्धतो दूराद्रासभीशब्दमशृणोत् । तच्छ्रवणमात्रेणैव स्वयं शब्दायितुमारब्धः । अथ ते क्षेत्रपाला रासभोऽयं व्याघ्रचर्मप्रतिच्छन्न इति ज्ञात्वा लगुडशरपाषाणप्रहारैस्तं व्यापादितवन्तः । अतोऽहं ब्रवीमि—'सुगुप्तं रक्ष्यमाणोऽपि' इति । अथैवं तेन सह वदतो मकरस्य, जलचरेणैकेनागत्याभिहितम्—'भो मकर, त्वदीया भार्यानशनोपविष्टा त्वयि चिरयति प्रणयाभिभवाद्विपन्ना[3] ।' एवं तद्वज्रपातसदृशवचनमाकर्ण्यातीव व्याकुलितहृदयः प्रलपितमेवं चकार—'अहो, किमिदं संजातं मे मन्दभाग्यस्य । उक्तं च—

माता यस्य गृहे नास्ति भार्या च प्रियवादिनी ।
अरण्यं तेन गन्तव्यं यथारण्यं तथा गृहम् ॥ ५० ॥

तन्मित्र, क्षम्यताम् । मया तेऽपराधः कृतः । संप्रत्यहं तु स्त्रीवियोगाद्वैश्वानरप्रवेशं करिष्यामि ।' तच्छ्रुत्वा वानरः प्रहसन्प्रोवाच—'भोः, ज्ञातं मया प्रथममेव यत्त्वं स्त्रीवश्यः

१ देहम् आच्छाद्य । २ पुष्टशरीरः । ३ मृता ।

स्त्रीजितश्च । सांप्रतं च प्रत्ययः संजातः । तन्मूढ, आनन्देऽपि जाते त्वं विषादं गतः । तादृग्भार्यायां मृतायामुत्सवः कर्तुं युज्यते । उक्तं च यतः—

या भार्या दुष्टचारित्रा सततं कलहप्रिया ।
भार्यारूपेण सा ज्ञेया विदग्धैर्दारुणा जरा ॥ ५१ ॥
तस्मात्सर्वप्रयत्नेन नामापि परिवर्जयेत् ।
स्त्रीणामिह हि सर्वासां य इच्छेत्सुखमात्मनः ॥ ५२ ॥
यदन्तस्तन्न जिह्वायां यज्जिह्वायां न तद्बहिः ।
यद्बहिस्तन्न कुर्वन्ति विचित्रचरिताः स्त्रियः ॥ ५३ ॥
के नाम न विनश्यन्ति मिथ्याज्ञानान्नितम्बिनीम् ।
रम्यां य उपसर्पन्ति दीपाभां शलभा यथा ॥ ५४ ॥
अन्तर्विषमया ह्येता बहिश्चैव मनोरमाः ।
गुञ्जाफलसमाकाराः स्वभावादेव योषितः ॥ ५५ ॥
ताडिता अपि दण्डेन शस्त्रैरपि विखण्डिताः ।
न वशं योषितो यान्ति न दानैर्न च संस्तवैः ॥ ५६ ॥
आस्तां तावत्किमन्येन दौरात्म्येनेह योषिताम् ।
विधृतं स्वोदरेणापि घ्नन्ति पुत्रं स्वकं रुषा ॥ ५७ ॥
रूक्षायां स्नेहसद्भावं कठोरायां सुमार्दवम् ।
नीरसायां रसं बालो बालिकायां विकल्पयेत्' ॥ ५८ ॥

मकर आह—'भो मित्र, अस्त्वेतत् । परं किं करोमि । ममानर्थद्वयमेतत्सञ्जातम् । एकस्तावद् गृहभङ्गः, अपरस्त्वद्विधेन मित्रेण सह चित्तविश्लेषः । अथवा भवत्येवं दैवयोगात् उक्तं च यतः—

यादृशं मम पाण्डित्यं तादृशं द्विगुणं तव ।
नाभूज्जारो न भर्ता च किं निरीक्षसि नग्निके, ॥ ५९ ॥

वानर आह—'कथमेतत् । मकरोऽब्रवीत्—

# कथा ( ८ )

कस्मिंश्चिदधिष्ठाने [1]हालिकदम्पती प्रतिवसतः स्म । सा च हालिकभार्या पत्युर्वृद्धभावात् सदैवान्यचित्ता न कथंचिद् गृहे स्थैर्यमालम्बते । केवलं परपुरुषानन्वेषमाणा परिभ्रमति । अथ केनचित् परवित्तापहारकेण धूर्तेन सा लक्षिता विजने प्रोक्ता च—'सुभगे, मृतभार्योऽहम् । त्वद्दर्शनेन स्मरपीडितश्च । तद्दीयतां मे रतिदक्षिणा ।' ततस्तयाभिहितम्—'भोः सुभग, यद्येवं तदस्ति मे पत्युः प्रभूतं धनम् । स च वृद्धत्वात्प्रचलितुमप्यसमर्थः । ततस्तद्धनमादायाहमागच्छामि । येन त्वया सहान्यत्र गत्वा यथेच्छया रतिसुखमनुभविष्यामि ।' सोऽब्रवीत्—'रोचते मह्यमप्येतत् । तत्प्रत्यूषेऽत्र शीघ्रमेव समागन्तव्यम्, येन शुभतरं किंचिन्नगरं गत्वा त्वया सह जीवलोकः सफलीक्रियते ।' सापि 'तथा' इति प्रतिज्ञाय प्रहसितवदना स्वगृहं गत्वा रात्रौ प्रसुप्ते भर्तरि सर्वं वित्तमादाय प्रत्यूषसमये तत्कथितस्थानमुपाद्रवत् । धूर्तोऽपि तामग्रे विधाय दक्षिणां दिशमाश्रित्य सत्वरगतिः प्रस्थितः । एवं तयोर्व्रजतोर्योजनद्वयमात्रेणाग्रतः काचिन्नदी समुपस्थिता । तां दृष्ट्वा धूर्तश्चिन्तयामास—किमहमनया यौवनप्रान्ते [2] वर्तमानया करिष्यामि । किञ्च कदाप्यस्याः पृष्ठतः कोऽपि समेष्यति, तन्मे महाननर्थः स्यात् । तत् केवलमस्या वित्तमादाय गच्छामि।' इति निश्चित्य तामुवाच—'प्रिये, सुदुस्तरेयं महानदी । तदहं द्रव्यमात्रं पारे धृत्वा समागच्छामि । ततस्त्वामेकाकिनीं स्वपृष्ठमारोप्य सुखेनोत्तारयिष्यामि ।' सा प्राह—'सुभग, एवं क्रियताम् ।' इत्युक्त्वाऽशेषवित्तं तस्मै समर्पयामास । अथ तेनाभिहितम्—

१ हलेन उपजीविनौ स्त्री पुंसौ । २ तारुण्यावसाने ।

'भद्रे परिधानाच्छादनवस्त्रमपि समर्प्य येन जलमध्ये निःशङ्का व्रजसि। तथानुष्ठिते धूर्तो वित्तं वस्त्रयुगलं चादाय [1]यथाचिन्तितविषयं गतः। सापि[2] कण्ठनिवेशितहस्तयुगला सोद्वेगा नदीपुलिनदेश उपविष्टा यावत्तिष्ठति, तावदेतस्मिन्नन्तरे काचिच्छृगालिका [3]मांसपिण्डगृहीतवदना तत्राजगाम। आगत्य च यावत्पश्यति, तावन्नदीतीरे महान्मत्स्यः सलिलान्निष्क्रम्य बहिः स्थित आस्ते। एतं च दृष्ट्वा मांसपिण्डं समुत्सृज्य तं मत्स्यं प्रत्युपाद्रवत्। अत्रान्तर आकाशादवतीर्य कोऽपि गृध्रस्तमादाय पुनः खमुत्पपात। मत्स्योऽपि शृगालिकां दृष्ट्वा नद्यां प्रविवेश। सा शृगालिका व्यर्थश्रमा गृध्रमवलोकयन्ती तया नग्निकया सस्मितमभिहिता—

'गृध्रेणापहृतं मांसं मत्स्योऽपि सलिलं गतः।
मत्स्यमांसपरिभ्रष्टे किं निरीक्षसि जम्बुके' ॥ ६० ॥

तच्छ्रुत्वा शृगालिका तामपि पतिधनजारपरिभ्रष्टां दृष्ट्वा सोपहासमाह—

'यादृशं मम पाण्डित्यं तादृशं द्विगुणं तव।
नाभूज्जारो न भर्ता च किं निरीक्षसि नग्निके' ॥ ६१ ॥

एवं तस्य कथयतः पुनरन्येन जलचरेणागत्य निवेदितम्—'यदहो, त्वदीयं गृहमप्यपरेण महामकरेण गृहीतम्।' तच्छ्रुत्वासावतिदुःखितमनास्तं गृहान्निःसारयितुमुपायं चिन्तयन्नुवाच 'अहो, पश्यतां मे दैवोपहतत्वम्।

१ यथाचिन्तितविषयं यथेप्सितदेशम्। २ कण्ठेति-लज्जया स्तनाच्छादनार्थं कण्ठे निवेशितं हस्तयुगलं यया सा। ३ मांसपिण्डं गृहीतं वदने यया सा।

मित्रं ह्यमित्रतां यातमपरं मे प्रिया मृता ।
गृहमन्येन च व्याप्तं किमद्यापि भविष्यति ॥ ६२ ॥

अथवा युक्तमिदमुच्यते—

क्षते प्रहारा निपतन्त्यभीक्ष्ण-
मन्नक्षये वर्धति जाठराग्निः ।
आपत्सु वैराणि समुद्भवन्ति
वामे विधौ सर्वमिदं नराणाम् ॥ ६३ ॥

तत्किं करोमि । किमनेन सह युद्धं करोमि । किं वा साम्नैव संबोध्य गृहान्निःसारयामि । किं वा भेदं दानं वा करोमि । अथवामुमेव वानरमित्रं पृच्छामि । उक्तं च—

यः पृष्ट्वा कुरुते कार्यं प्रष्टव्यान्स्वहितान्गुरून् ।
न तस्य जायते विघ्नः कस्मिंश्चिदपि कर्मणि' ॥ ६४ ॥

एवं संप्रधार्य भूयोऽपि तमेव जम्बूवृक्षमारूढं कपिमपृच्छत् —'भो मित्र, पश्य मे मन्दभाग्यताम् । यत्संप्रति गृहमपि मे बलवत्तरेण मकरेण रुद्धम् । तदहं त्वां प्रष्टुमभ्यागतः । कथय किं करोमि । सामादीनामुपायानां मध्ये कस्यात्र विषयः' स आह—'भोः कृतघ्न पापचारिन्, मया निषिद्धोऽपि किं भूयो मामनुसरसि । नाहं तव मूर्खस्योपदेशमपि दास्यामि ।' तच्छ्रुत्वा मकरः प्राह—'भो मित्र, सापराधस्य मे पूर्वस्नेहमनुस्मृत्य हितोपदेशं देहि ।' वानर आह—'नाहं ते कथयिष्यामि । यद्भार्यावाक्येन भवताहं समुद्रे प्रक्षेप्तुं नीतः । तदेवं न युक्तम् । यद्यपि भार्या सर्वलोकादपि वल्लभा भवति तथापि न मित्राणि बान्धवाश्च भार्यावाक्येन समुद्रे प्रक्षिप्यन्ते । तन्मूर्ख, मूढत्वेन नाशस्तव प्रागेव निवेदित आसीत् । यतः—

सतां वचनमादिष्टं मदेन न करोति यः ।
स विनाशमवाप्नोति घण्टोष्ट्र इव सत्वरम् ॥ ६५ ॥

मकर आह—'कथमेतत् । सोऽब्रवीत्—

## कथा ( ६ )

कस्मिंश्चिदधिष्ठाने उज्ज्वलको नाम रथकारः प्रतिवसति स्म । स चातीव दारिद्र्योपहतश्चिन्तितवान्—'अहो, धिगियं दरिद्रतास्मद्गृहे । यतः सर्वोऽपि जनः स्वकर्मण्येव रतस्तिष्ठति । अस्मदीयः पुनर्व्यापारो नात्राधिष्ठानेऽर्हति । यतः सर्वलोकानां चिरंतनाश्चतुर्भूमिका[1]गृहाः सन्ति । मम एकमपि तत्रास्ति । तत्किं मदीयेन रथकारत्वेन प्रयोजनम् ।' इति चिन्तयित्वा देशान्निष्क्रान्तः । यावत्किंचिद्वनं गच्छति तावद्गह्वराकारवनगहनमध्ये[2] सूर्यास्तमनवेलायां स्वयूथाद् भ्रष्टां प्रसववेदनया पीड्यमानामुष्ट्रीमपश्यत् । स च [3]दासेरकयुक्तामुष्ट्रीं गृहीत्वा स्वस्थानाभिमुखः प्रस्थितः । गृहमासाद्य रज्जुं गृहीत्वा तामुष्ट्रिकां बबन्ध । ततश्च तीक्ष्णं परशुमादाय तस्याः कृते पल्लवानयनार्थं पर्वतैकदेशे गतः । तत्र च नूतनानि कोमलानि बहूनि पल्लवानि छित्त्वा शिरसि समारोप्य तस्या अग्रे निचिक्षेप । तया च तानि शनैः शनैर्भक्षितानि । पश्चात्पल्लवभक्षणप्रभावादहर्निशं पीवरतनुरुष्ट्री सञ्जाता । सोऽपि दासेरको महानुष्ट्रः संजातः । ततः स नित्यमेव दुग्धं गृहीत्वा स्वकुटुम्बं परिपालयति । अथ रथकारेण वल्लभत्वाद्दासेरकग्रीवायां महती घण्टा प्रतिबद्धा ।

१ चतुर्भूमिका चतुःप्रकोष्ठाः । २ गह्वरेति गह्वरस्य गुफायाः आकार इव आकारो यस्य तथाभूतं यद् वनगहनं अत्यन्तं सघनं वनं सूर्यकिरणस्यापि प्रवेशायोग्यमित्यर्थः, तन्मध्ये । ३ दासेरकयुक्तां उष्ट्रशिशुसहितामित्यर्थः ।

पश्चाद्रथकारो व्यचिन्तयत्—'अहो, किमन्यैर्दुष्कृतकर्मभि[1]:, यावन्ममैतस्मादेवोष्ट्रीपरिपालनादस्य कुटुम्बस्य भव्यं संजातम् । तत्किमन्येन व्यापारेण ।' एवं विचिन्त्य गृहमागत्य प्रियामाह—'भद्रे, समीचीनोऽयं व्यापारः । तव संमतिश्चेत्कुतोऽपि धनिकात्किञ्चिद् द्रव्यमादाय मया गुर्जरदेशे गन्तव्यं करभग्रहणाय । तावत्त्वयैतौ यत्नेन रक्षणीयौ । यावदहमपरामुष्ट्रीं नीत्वा समागच्छामि ।' ततश्च गुर्जरदेशं गत्वोष्ट्रीं गृहीत्वा स्वगृहमागतः । किं बहुना । तेन तथा कृतं यथा तस्य प्रचुरा उष्ट्र्यः करभाश्च संमिलिताः । ततस्तेन महदुष्ट्रयूथं कृत्वा रक्षापुरुषो धृतः । तस्य वर्षं प्रति वृत्त्या करभमेकं प्रयच्छति । अन्यच्चाहर्निशं दुग्धपानं तस्य निरूपितम् । एवं रथकारोऽपि नित्यमेवोष्ट्रीकरभव्यापारं कुर्वन्सुखेन तिष्ठति । अथ ते दासेरका [2]अधिष्ठानोपवन आहारार्थं गच्छन्ति । कोमलवल्लीर्यथेच्छया भक्षयित्वा महति सरसि पानीयं पीत्वा सायंतनसमये मन्दं मन्दं लीलया गृहमागच्छन्ति । स च पूर्वदासेरको मदातिरेकात्पृष्ठ आगत्य मिलति । ततस्तैः कलभैरभिहितम्—'अहो मन्दमतिरयं दासेरको यथा यूथाद् भ्रष्टः पृष्ठे स्थित्वा घण्टां वादयन्नागच्छति । यदि कस्यापि दुष्टसत्त्वस्य मुखे पतिष्यति, तन्नूनं मृत्युमवाप्स्यति । अथैकदा तैः असकृदेव निषिद्धः सन् अपि स तद्वचने कर्णमदत्त्वैव मदातिरेकाद् घण्टां वादयन् वनं प्रविष्टः । इत्थं तस्य तद्वनं गाहमानस्य तत्रस्थः कश्चित्सिंहो घण्टारवमाकर्ण्य शब्दानुसारेण दृष्टिं निपात्य अवलोकयति, यदुष्ट्रीदासेरकाणां यूथं गच्छति । स तु पुनः प्रतिदिवसमिव पृष्ठे क्रीडां कुर्वन्वल्लरीश्चरन्यावत्तिष्ठति, तावदन्ये दासेरकाः पानीयं पीत्वा स्वगृहे गताः । ततः सोऽपि

१ दुःखसाध्यकर्मभिः । २ अधिष्ठानोपवने नगरस्य समीपस्थे वने ।

घनान्निष्क्रम्य यावद्दिशोऽवलोकयति, तावन्न कंचिन्मार्गं पश्यति वेत्ति वा । यूथाद् भ्रष्टो मन्दं मन्दं बृहच्छब्दं कुर्वन्यावत्कियद्दूरं गच्छति, तावत्तच्छब्दानुसारी सिंहोऽपि क्रमं कृत्वा निभृतोऽग्रे व्यवस्थितः । ततो यावदुष्ट्रः समीपमागतः; तावत्सिंहेन [1]लम्फयित्वा, ग्रीवायां गृहीतो मारितश्च । अतोऽहं ब्रवीमि—'सतां वचनमादिष्टम्' इति । अथ तच्छ्रुत्वा मकरः प्राह—'भद्र'

प्राहुः साप्तपदं मैत्रं जनाः शास्त्रविचक्षणाः ।
मित्रतां च पुरस्कृत्य किंचिद्वक्ष्यामि तच्छृणु ॥ ६६ ॥
उपदेशप्रदातॄणां नराणां हितमिच्छताम् ।
परस्मिन्निहलोके च व्यसनं नोपपद्यते ॥ ६७ ॥

तत्सर्वथा कृतघ्नस्यापि मे कुरु प्रसादमुपदेशप्रदानेन । उक्तं च—

उपकारिषु यः साधुः साधुत्वे तस्य को गुणः ।
अपकारिषु यः साधुः स साधुः सद्भिरुच्यते ' ॥ ६८ ॥

तदाकर्ण्य वानरः प्राह—'भद्र, यद्येवं तर्हि तत्र गत्वा तेन सह युद्धं कुरु । उक्तं च—

हतस्त्वं प्राप्स्यसि स्वर्गं जीवन्गृहमथो यशः ।
युध्यमानस्य ते भावि गुणद्वयमनुत्तमम् ॥ ६९ ॥
उत्तमं प्रणिपातेन शूरं भेदेन योजयेत् ।
नीचमल्पप्रदानेन समशक्तिं पराक्रमैः ॥ ७० ॥

मकरः प्राह 'कथमेतत् ।' सोऽब्रवीत्—

१ लम्फयित्वा उत्प्लुत्य ।

# कथा (१०)

आसीत्कस्मिंश्चिद्वनोद्देशे महाचतुरको नाम शृगालः । तेन कदाचिदरण्ये स्वयं मृतो गजः समासादितः । तस्य समन्तात्परिभ्रमति, परं कठिनां त्वचं भेत्तुं न शक्नोति । अथात्रावसरे इतश्चेतश्च विचरन्कश्चित्सिंहस्तत्रैव प्रदेशे समाययौ । अथ सिंहं समागतं दृष्ट्वा स [1]क्षितितलविन्यस्तमौलिमण्डलः [2]संयोजितकरयुगलः सविनयमुवाच स्वामिन् !, त्वदीयोऽहं [3]लागुडिकः स्थितस्त्वदर्थ गजमिमं रक्षामि । तदेनं भक्षयतु स्वामी ।' तं प्रणतं दृष्ट्वा सिंहः प्राह—'भोः, नाहमन्येन हतं सत्त्वं कदाचिदपि भक्षयामि । उक्तं च—

वनेऽपि सिंहा मृगमांसभक्ष्या
बुभुक्षिता नैव तृणं चरन्ति ।
एवं कुलीना व्यसनाभिभूता
न नीतिमार्गं परिलङ्घयन्ति ॥ ७१ ॥

तत्तवैव गजोऽयं मया[4]प्रसादीकृतः ।' तच्छ्रुत्वा शृगालः सानन्दमाह—'युक्तमिदं स्वामिनो निजभृत्येषु । उक्तं च यतः—

अन्त्यावस्थोऽपि महान्स्वामिगुणान्नो जहाति शुद्धतया ।
न श्वेतभावमुज्झति शङ्खः शिखिभुक्तिमुक्तोऽपि' ॥ ७२ ॥

अथ सिंहे गते कश्चिद्व्याघ्रः समाययौ । तमपि दृष्ट्वासौ व्यचिन्तयत्—'अहो, एकस्तावद् दुरात्मा प्रणिपातेनापवाहितः[5] ।

---

१ क्षितितले पृथिव्यां विन्यस्तं स्थापितं मौलिमण्डलं येन तथाभूतः । २ संयोजितं बद्धं करयुगलं हस्तद्वयं येन तादृशः, बद्धाञ्जलिरित्यर्थः । ३ लागुडिकः लगुडः प्रहरणम् अस्येति लागुडिकः लगुडधारी भृत्य इत्यर्थः । ४ प्रसन्नतापूर्वकं दत्तः । ५ दूरमपसारित इत्यर्थः ।

तत्कथमिदानीमेनमपवाहयिष्यामि[1] । नूनं शूरोऽयम् । न खलु भेदं विना साध्यो भविष्यति । उक्तं च यतः—

न यत्र शक्यते कर्तुं साम्ना दानमथापि वा ।
भेदस्तत्र प्रयोक्तव्यो यतः स वशकारकः ॥ ७३ ॥

किंच, सर्वगुणसंपन्नोऽपि भेदेन बध्यते । उक्तं च यतः—

अन्तःस्थेन विरुद्धेन सुवृत्तेनातिचारुणा ।
अन्तर्भिन्नेन संप्राप्तं मौक्तिकेनापि बन्धनम्' ॥ ७४ ॥

एवं संप्रधार्य तस्याभिमुखो भूत्वा गर्वादुन्नतकन्धरः ससंभ्रममुवाच—'माम, कथमत्र भवान्मृत्युमुखे प्रविष्टः । येनैष गजः सिंहेन व्यापादितः । स च मामेतद्रक्षणे नियुज्य नद्यां स्नानार्थं गतः । तेन च गच्छता मम समादिष्टम्—'यदि कश्चिदिह व्याघ्रः समायाति, त्वया सुगुप्तं ममावेदनीयम् । येन वनमिदं मया निर्व्याघ्रं कर्तव्यम् । यतः पूर्वं व्याघ्रेणैकेन मया व्यापादितो गजः शून्ये भक्षयित्वोच्छिष्टतां नीतः । तद्दिनादारभ्य व्याघ्रान्प्रति प्रकुपितोऽस्मि । तच्छ्रुत्वा व्याघ्रः संत्रस्तमाह—'भो भागिनेय, देहि मे प्राणदक्षिणाम् । त्वया तस्यात्र चिरायायातस्यापि मदीया कापि वार्ता नाख्येया ।' एवमभिधाय सत्वरं पलायांचक्रे । अथ गते व्याघ्रे तत्र कश्चिद् द्वीपी[2] समायातः । तमपि दृष्ट्वासौ व्यचिन्तयत्—'[3]दृढदंष्ट्रोऽयं चित्रकः[4] । तदस्य पार्श्वादस्य गजस्य यथा चर्मच्छेदो भवति तथा करोमि । एवं निश्चित्य तमप्युवाच—'भो भगिनीसुत, किमिति चिराद् दृष्टोऽसि । कथं च बुभुक्षित इव लक्ष्यसे । तदतिथिरसि मे । एष गजः सिंहेन हतस्तिष्ठति । अहं चास्य तदादिष्टो रक्षपालः । परं

१ अपसारयिष्यामि । २ व्याघ्रविशेषः । ३ दृढदंष्ट्रः—दृढा अतिकठिना तीक्ष्णेत्यर्थः दंष्ट्रा यस्य सः । ४ कर्बुरशरीरो व्याघ्रः, भाषायां "चीता" कथ्यते ।

तथापि यावत्सिंहो न समायाति, तावदस्य गजस्य मांसं भक्षयित्वा तृप्तिं कृत्वा द्रुततरं व्रज ।' स आह—'माम, यद्येवं तन्न कार्यं मे मांसाशनेन, यतः 'जीवन्नरो भद्रशतानि पश्यति ।' उक्तं च—

यच्छक्यं ग्रसितुं शस्तं ग्रस्तं परिणमेच्च यत् ।
हितं च परिणामे यत्तदाद्यं भूतिमिच्छता ॥ ७५ ॥

तत्सर्वथा तदेव भुज्यते यदेव परिणमति । तदहमितोऽपयास्यामि ।' शृगाल आह—'भो अधीर, विश्रब्धो भूत्वा भक्षय त्वम् । तस्यागमनं दूरतोऽपि तवाहं निवेदयिष्यामि । तथानुष्ठिते द्वीपिना भिन्नां त्वचं विज्ञाय जम्बूकेनाभिहितम्—'भो भगिनीसुत, गम्यताम् । एष सिंहः समायाति ।' तच्छ्रुत्वा चित्रको दूरं प्रनष्टः । अथ यावदसौ तद्भेदकृतद्वारेण किंचिन्मांसं भक्षयति, तावदतिसंक्रुद्धोऽपरः शृगालः समाययौ । अथ तमात्मतुल्यपराक्रमं दृष्ट्वैनं श्लोकमपठत्—

'उत्तमं प्रणिपातेन शूरं भेदेन योजयेत् ।
नीचमल्पप्रदानेन समशक्तिं पराक्रमैः ॥ ७६ ॥

ततश्च तदभिमुखकृतप्रयाणः स्वदंष्ट्राभिस्तं विदार्य [1]दशोभागं कृत्वा स्वयं सुखेन चिरकालं हस्तिमांसं बुभुजे । एवं त्वमपि तं रिपुं स्वजातीयं युद्धेन परिभूय दिशोभागं कुरु । नो चेत्पश्चाद्बद्धमूलादस्मात्त्वमपि विनाशमवाप्स्यसि । उक्तं च यतः—

संभाव्यं गोषु संपन्नं संभाव्यं ब्राह्मणे तपः ।
संभाव्यं स्त्रीषु चापल्यं संभाव्यं जातितो भयम् ॥ ७७ ॥
सुभिक्षाणि विचित्राणि शिथिलाः पौरयोषितः ।
एको दोषो विदेशस्य स्वजातिर्यद्विरुध्यते ॥ ७८ ॥

मकर आह—'कथमेतत् ।' वानरोऽब्रवीत्—

१ दिशो भागं कृत्वा दिग्भ्यः बलिं दत्त्वेत्यर्थः ।

## कथा ( ११ )

अस्ति कस्मिंश्चिदधिष्ठाने चित्राङ्गो नाम [1]सारमेयः । तत्र च चिरकालं दुर्भिक्षं पतितम् । अन्नाभावात्सारमेयादयो निष्कुलतां गन्तुमारब्धाः । अथ चित्राङ्गः क्षुत्क्षामकण्ठस्तद्भयाद्देशान्तरं गतः । तत्र च कस्मिंश्चित्पुरे कस्यचिद् [2]गृहमेधिनो गृहिण्याः प्रमादेन प्रतिदिनं गृहं प्रविश्य विविधान्नानि भक्षयन्परां तृप्तिं गच्छति । परं तद्गृहाद्बहिर्निष्क्रान्तोऽन्यैर्मदोद्धतसारमेयैः सर्वदिक्षु परिवृत्य सर्वाङ्गं दंष्ट्राभिर्विदार्यते । ततस्तेन विचिन्तितम्—'अहो, वरं स्वदेशो यत्र दुर्भिक्षेऽपि सुखेन स्थीयते । न च कोऽपि युद्धं करोति । तदेवं स्वनगरं व्रजामि' इत्यवधार्य स्वस्थानं प्रति जगाम । अथासौ देशान्तरात्समायातः सर्वैरपि स्वजनैः पृष्टः—'भोश्चित्राङ्ग, कथयास्माकं देशान्तरवार्ताम् । कीदृग्देशः । किं चेष्टितं लोकस्य । क आहारः । कश्च व्यवहारस्तत्र' इति । स आह—'किं कथ्यते विदेशस्य स्वरूपविषयः ।

सुभिक्षाणि विचित्राणि शिथिलाः पौरयोषितः ।
एको दोषो विदेशस्य स्वजातिर्यद्विरुध्यते' ॥ ७९ ॥

सोऽपि मकरस्तदुपदेशं श्रुत्वा कृतमरणनिश्चयो वानरमनुज्ञाप्य स्वाश्रयं गतः । तत्र च तेन स्वगृहप्रविष्टेनाततायिना[3] सह विग्रहं कृत्वा दृढसत्त्वावष्टम्भनाच्च तं व्यापाद्य स्वाश्रयं च लब्ध्वा सुखेन चिरकालमतिष्ठत् । साध्विदमुच्यते—

अकृत्वा पौरुषं या श्रीः किं तयापि सुभोग्यया ।
जरद्गवः समश्नाति दैवादुपगतं तृणम् ॥ ८० ॥

इति पञ्चतन्त्रके लब्धप्रणाशं नाम चतुर्थं तन्त्रं समाप्तम् ।

---

१ कुक्कुरः । २ गृहमेधिनः गृहैः दारैः मेधन्ते सङ्गच्छन्ति इति गृहमेधिनः । ३ शत्रुणा ।

# अपरीक्षितकारकम् ।

अथेदमारभ्यतेऽपरीक्षितकारकं नाम पञ्चमं तन्त्रम्, यस्यायमादिमः श्लोकः—

कुदृष्टं कुपरिज्ञातं कुश्रुतं कुपरीक्षितम् ।
तन्नरेण न कर्तव्यं नापितेनात्र यत्कृतम् ॥ १ ॥

तद्यथानुश्रूयते—अस्ति दाक्षिणात्ये जनपदे पाटलिपुत्रं नाम नगरम् । तत्र मणिभद्रो नाम श्रेष्ठी प्रतिवसति स्म । तस्य च [1]धर्मार्थकाममोक्षकर्माणि कुर्वतो विधिवशाद्धनक्षयः संजातः । ततो विभवक्षयादपमानपरम्परया परं विषादं गतः । अथान्यदा रात्रौ सुप्तश्चिन्तितवान्—'अहो धिगियं दरिद्रता । उक्तं च—

शीलं शौचं क्षान्तिर्दाक्षिण्यं मधुरता कुले जन्म ।
न विराजन्ति हि सर्वे वित्तविहीनस्य पुरुषस्य ॥ २ ॥
मानो वा दर्पो विज्ञानं विभ्रमः सुबुद्धिर्वा ।
सर्वं प्रणश्यति समं वित्तविहीनो यदा पुरुषः ॥ ३ ॥
प्रतिदिवसं याति लयं वसन्तवाताहतेव शिशिरश्रीः ।
बुद्धिर्बुद्धिमतामपि कुटुम्बभरचिन्तया सततम् ॥ ४ ॥
नश्यति विपुलमतेरपि बुद्धिः पुरुषस्य मन्दविभवस्य ।
घृतलवणतैलतण्डुलवस्त्रेन्धनचिन्तया सततम् ॥ ५ ॥
गगनमिव नष्टतारं शुष्कमिव सरः श्मशानमिव रौद्रम् ।
प्रियदर्शनमपि रूक्षं भवति गृहं धनविहीनस्य ॥ ६ ॥

---

१ धर्मः-इहलोके परलोके च श्रेयःसाधनीभूतं कर्म, अर्थः-धनं, कामः विषयोपभोगः, मोक्षः-अपवर्गः, एतेषां कर्माणि साधनोपायरूपाः क्रियाः ।

न विभाव्यन्ते लघवो वित्तविहीनाः पुरेऽपि निवसन्तः ।
सततं जातविनष्टाः पयसामिव बुद्बुदाः पयसि ॥ ७ ॥

सुकुलं कुशलं सुजनं विहाय कुलकुशलशीलविकलेऽपि ।
आढ्ये कल्पतराविव नित्यं रज्यन्ति जननिवहाः ॥ ८ ॥

विफलमिह पूर्वसुकृतं विद्यावन्तोऽपि कुलसमुद्भूताः ।
यस्य यदा विभवः स्यात्तस्य तदा दासतां यान्ति ॥ ९ ॥

लघुरयमाह न लोकः कामं गर्जन्तमपि पतिं पयसाम् ।
सर्वमलज्जाकरमिह यत्कुर्वन्तीह परिपूर्णाः' ॥ १० ॥

एवं [1]संप्रधार्य भूयोऽप्यचिन्तयत्—'तदहमनशनं कृत्वा प्राणानुत्सृजामि। किमनेन नो व्यर्थजीवितव्यसनेन[2]।' एवं निश्चयं कृत्वा सुप्तः। अथ तस्य स्वप्ने [3]पद्मनिधिः क्षपणकरूपी[4]दर्शनं दत्वा प्रोवाच—'भोः श्रेष्ठिन्, मा त्वं वैराग्यं गच्छ। अहं पद्मनिधिस्तव [5]पूर्वपुरुषोपार्जितः। तदनेनैव रूपेण प्रातस्त्वद्गृहमागमिष्यामि। ततः त्वयाहं लगुडप्रहारेण शिरसि ताडनीयः, येन कनकमयो भूत्वाक्षयो भवामि। अथ प्रातः प्रबुद्धः सन्स्वप्नं स्मरंश्चिन्ताचक्रमारूढस्तिष्ठति—'अहो, सत्योऽयं स्वप्नः किंवा असत्यो भविष्यति, न ज्ञायते। अथवा नूनं मिथ्या भाव्यम्, यतोऽहं केवलं वित्तमेव चिन्तयामि उक्तं च—

व्याधितेन सशोकेन चिन्ताग्रस्तेन जन्तुना ।
कामार्तेनाथ मत्तेन दृष्टः स्वप्नो निरर्थकः' ॥ ११ ॥

---

१ सम्प्रधार्य-विचार्य। २ व्यर्थेति व्यर्थं फलरहितं यत् जीवनव्यसनं जीवनं प्रति ममत्वमित्यर्थः, तेन। ३ पद्मनिधिः-धनाधिदेवः। ४ क्षपणकरूपीति बौद्धसन्यासिनो रूपं धृत्वा। ५ पूर्वपुरुषेति अस्माकं वंशधराः कदाचिद्दरिद्राभवेयुरित्याशङ्क्य पूर्वपुरुषैः उपार्जितः अतिकठिनेन तपसा सन्तोषितः।

एतस्मिन्नन्तरे तस्य भार्यया कश्चिन्नापितः पादप्रक्षालनायाहूतः । अत्रान्तरे च यथानिर्दिष्टः क्षपणकः सहसा प्रादुर्बभूव । अथ स तमालोक्य प्रहृष्टमना [1]आसन्नकाष्ठदण्डेन तं शिरस्यताडयत् । सोऽपि सुवर्णमयो भूत्वा तत्क्षणाद्भूमौ निपतितः । अथ स श्रेष्ठी निभृतं स्वगृहमध्ये कृत्वा नापितं संतोष्य प्रोवाच—'तदेतद्धनं वस्त्राणि च मया दत्तानि गृहाण । भद्र, पुनः कस्यचिन्नाख्येयो वृत्तान्तः ।' नापितोऽपि स्वगृहं गत्वा व्यचिन्तयत्—'नूनमेते सर्वेऽपि नग्नकाः शिरसि दण्डहताः काञ्चनमया भवन्ति । तदहमपि प्रातः प्रभूतानाहूय लगुडैः शिरसि हन्मि, येन प्रभूतं हाटकं मे भवति ।' एवं चिन्तयतो महता कष्टेन निशामतिचक्राम । अथ प्रभातेऽभ्युत्थाय बृहल्लगुडमेकं [2]प्रगुणीकृत्य[3]क्षपणकविहारं गत्वा [4]जिनेन्द्रस्य प्रदक्षिणत्रयं विधाय जानुभ्यामवनिं गत्वा [5]वक्त्रद्वारन्यस्तोत्तरीयाञ्चलस्तारस्वरेणेमं श्लोकमपठत्—

'जयन्ति ते जिना येषां केवलज्ञानशालिनाम् ।
आजन्मनः स्मरोत्पत्तौ मानसेनोषरायितम् ॥ १२ ॥

अन्यच्च—

सा जिह्वा या जिनं स्तौति तच्चित्तं यज्जिने रतम् ।
तावेव च करौ श्लाघ्यौ यौ तत्पूजाकरौ करौ ॥ १३ ॥

तथा च—

ध्यानव्याजमुपेत्य चिन्तयसि कामुन्मील्य चक्षुः क्षणं
पश्यानङ्गशरातुरं जनमिमं त्रातापि नो रक्षसि ।

---

१ आसन्नेति समीपस्थितदण्डेन । २ प्रगुणीकृत्य-सज्जीकृत्य । ३ क्षपणकेति-बौद्धसन्यासिनाम् आश्रमम् । ४ जिनेन्द्रस्य-बौद्धगुरोः । ५ वक्त्रद्वारे मुखे न्यस्तम् उत्तरीयस्य अञ्चलं येन सः ।

मिथ्याकारुणिकोऽसि निर्घृणतरस्त्वत्तः कुतोऽन्यः पुमा-
न्सेर्ष्यं मारवधूभिरित्यभिहितो बौद्धो जिनः पातु वः ॥१४॥

एवं संस्तुत्य ततः प्रधानक्षपणकमासाद्य क्षितिनिहितजानुचरणः, 'नमोऽस्तु वन्दे' इत्युच्चार्य लब्धधर्मवृद्ध्याशीर्वादः[1] [2]सुखमालिकानुग्रहलब्धव्रतादेश [3]उत्तरीयनिबद्धग्रन्थिः [4]सप्रश्रयमिदमाह—'भगवन्, अद्य विहरणक्रिया समस्तमुनिसमेतेनास्मद्गृहे कर्तव्या।' स आह—'भोः श्रावक, धर्मज्ञोऽपि किमेवं वदसि। किं वयं ब्राह्मणसमानाः यत आमन्त्रणं करोषि। वयं सदैव [5]तत्कालपरिचर्यया भ्रमन्तो भक्तिभाजं [6]श्रावकमवलोक्य तस्य गृहे गच्छामः। तेन कृच्छ्रादभ्यर्थितास्तद्गृहे [7]प्राणधारणमात्रामशनक्रियां कुर्मः। तद्गम्यताम्। नैवं भूयोऽपि वाच्यम्।' तच्छ्रुत्वा नापित आह—'भगवन्, वेद्म्यहं युष्मद्धर्मम्। परं भवतो बहुश्रावका आह्वयन्ति। सांप्रतं पुनः पुस्तकाच्छादनयोग्यानि [8]कर्पटानि बहुमूल्यानि [9]प्रगुणीकृतानि। तथा पुस्तकानां लेखनाय लेखकानाञ्च वित्तं सञ्चितमास्ते। तत्सर्वथा कालोचितं कार्यम्।' ततो नापितोऽपि स्वगृहं

---

१ लब्धः क्षपणकात् प्राप्तः धर्मवृद्धये आशीर्वादो येन तथाभूतः। २ सुखेति सुखा सुखकरा मालिका सुखमालिका, सुखकरं पुष्पदाम, तया यः अनुग्रहः, प्रसन्नतापूर्वकं समर्पणं तेन लब्धः व्रते आदेशः आज्ञा येन सः। ३ उत्तरीयेति-उत्तरीये प्रावारके वस्त्रे (दुपट्टा) निबद्धः ग्रन्थिः येन सः, गलस्य अधोदेशे निबद्धप्रावारकैकदेश इत्यर्थः। ४ सप्रश्रयं सविनयम्। ५ तत्काले उचितावसरे या परिचर्या सेवा तया भ्रमन्तः पर्यटन्तः। ६ कञ्चन शिष्यमित्यर्थः। ७ प्राणरक्षणमात्रम् आहारम्। ८ कर्पटानि वस्त्राणि। ९ एकत्रीकृतानि।

गतः । तत्र च गत्वा खदिरमयं लगुडं सज्जीकृत्य कपाटयुगलं द्वारि समाधाय सार्धप्रहरैकसमये भूयोऽपि विहारद्वारमाश्रित्य सर्वान्क्रमेण निष्क्रामतो गुरुप्रार्थनया स्वगृहमानयत् । तेऽपि सर्वे कर्पटवित्तलोभेन भक्तियुक्तानपि परिचितश्रावकान्परित्यज्य प्रहृष्टमनसस्तस्य पृष्ठतो ययुः । अथवा साध्विदमुच्यते–

एकाकी गृहसंत्यक्तः पाणिपात्रो दिगम्बरः ।
सोऽपि संवाह्यते लोके तृष्णया पश्य कौतुकम् ॥१५॥
जीर्यन्ते जीर्यतः केशा दन्ता जीर्यन्ति जीर्यतः ।
चक्षुःश्रोत्रे च जीर्येते तृष्णैका तरुणायते' ॥ १६ ॥

अपरं गृहमध्ये तान् प्रवेश्य द्वारं निभृतं पिधाय लगुडप्रहारैः शिरस्यताडयत् । तेऽपि ताड्यमाना एके मृताः, अन्ये भिन्नमस्तकाः [1]फूत्कर्तुमुपचक्रमिरे । अत्रान्तरे [2]तमाक्रन्दमाकर्ण्य [3]कोटरक्षपालैरभिहितम्—'भो भोः, किमयं महान्कोलाहलो नगरमध्ये । तद्गम्यतां गम्यताम् ।' ते च सर्वे तदादेशकारिणस्तत्सहिता वेगात्तद्गृहं गता यावत्पश्यन्ति, तावद्रुधिरप्लावितदेहाः[4] पलायमाना [5]नग्नका दृष्टाः । पृष्टाश्च--'भोः, किमेतत् ।' ते प्रोचुर्यथावस्थितं नापितवृत्तान्तम् । तैरपि स नापितो बद्धो हतशेषैः सह धर्माधिष्ठानं नीतः । तैर्नापितः पृष्टः—'भोः, किमेतद्भवता कुकृत्यमनुष्ठितम् ।' स आह—'किं करोमि । मया श्रेष्ठिमणिभद्रगृहे दृष्ट एवंविधो व्यतिकरः[6] ।'

---

१ फूत्कर्तुं-क्रन्दितुमित्यर्थः । २ आक्रन्दं चीत्कारपूर्वकम् उच्चैराह्वानम् । ३ कोतवालप्रभृतिभिः पुरीपपुरुषैः । ४ रुधिरेति-रुधिरेण आप्लाविताः अभिषिक्ता इत्यर्थः देहाः येषां ते रुधिराप्लावितदेहाः । ५ नग्नकाः-क्षपणकाः । ६ व्यतिकरः व्यापारः ।

सोऽपि सर्वं मणिभद्रवृत्तान्तं यथादृष्टमकथयत्। ततः श्रेष्ठिनमाहूय भणितवन्तः—'भोः श्रेष्ठिन्, किं त्वया कश्चित्क्षपणको [1]व्यापादितः।' ततस्तेनापि सर्वः क्षपणकवृत्तान्तस्तेषां निवेदितः। अथ तैरभिहितम्—'अहो' शूलमारोप्यतामसौ दुष्टात्मा कुपरीक्षितकारी नापितः।' तथानुष्ठिते तैरभिहितम्—

कुदृष्टं कुपरिज्ञातं कुश्रुतं कुपरीक्षितम्।
तन्नरेण न कर्तव्यं नापितेनात्र यत्कृतम्॥ १७॥

अथवा साध्विदमुच्यते—

अपरीक्ष्य न कर्तव्यं कर्तव्यं सुपरीक्षितम्।
पश्चाद्भवति सन्तापो ब्राह्मण्यां नकुलार्थतः'॥ १८॥

मणिभद्र आह—'कथमेतत्।' ते धर्माधिकारिणः प्रोचुः—

## कथा (१)

कस्मिंश्चिदधिष्ठाने देवशर्मा नाम ब्राह्मणः प्रतिवसति स्म। तस्य भार्या प्रसूता सुतमजनयत्। तस्मिन्नेव दिने नकुली नकुलं प्रसूता। अथ सा सुतवत्सला दारकवत्तमपि नकुलं [2]स्तन्यदानाभ्यङ्गमर्दनादिभिः पुपोष। परं तस्य न विश्वसिति अपत्यस्नेहस्य सर्वस्नेहातिरिक्ततया सततम् एव माशङ्कते यत्कदाचिदेष स्वजातिदोषवशादस्य दारकस्य विरुद्धमाचरिष्यति। उक्तं च—

---

१ व्यापादितः-मारितः। २ स्तन्येति-स्तने भवं स्तन्यं दुग्धं, तस्य दानं, तथा अभ्यङ्गः-शरीरे तैलादिम्रक्षणं, मर्दनं हस्तपादादीनां संवाहनं शनैः-शनैः पीडनमित्यर्थः, एतानि आदीनि येषां तैः स्तन्यदानाभ्यङ्गमर्दनादिभिः।

कुपुत्रोऽपि भवेत्पुंसां हृदयानन्दकारकः ।
दुर्विनीतः कुरूपोऽपि मूर्खोऽपि व्यसनी खलः ॥ १९ ॥

एवं च भाषते लोकश्चन्दनं किल शीतलम् ।
पुत्रगात्रस्य संस्पर्शश्चन्दनादतिरिच्यते ॥ २० ॥

सौहृदस्य न वाञ्छन्ति जनकस्य हितस्य च ।
लोकाः प्रपालकस्यापि यथा पुत्रस्य वन्धनम् ॥ २१ ॥

अथ सा कदाचिच्छय्यायां पुत्रं शाययित्वा जलकुम्भमादाय पतिमुवाच—'ब्राह्मण, जलार्थमहं तडागे यास्यामि, त्वया पुत्रोऽयं नकुलाद्रक्षणीयः ।' अथ तस्यां गतायां पृष्ठे ब्राह्मणोऽपि शून्यं गृहं मुक्त्वा भिक्षार्थं क्वचिन्निर्गतः । अत्रान्तरे दैववशात्कृष्णसर्पो बिलान्निष्क्रान्तः । नकुलोऽपि तं स्वभाववैरिणं मत्वा भ्रातू रक्षणार्थं सर्पेण सह युद्ध्वा सर्पं खण्डशः कृतवान् । ततो [1]रुधिराप्लावितवदनः सानन्दं [2]स्वव्यापारप्रकाशनार्थं मातुः संमुखे गतः । मातापि तं रुधिरक्लिन्नमुखमवलोक्य शङ्कितचित्ता 'यदनेन दुरात्मना दारको भक्षितः' इति विचिन्त्य कोपात्तस्योपरि तं जलकुम्भं चिक्षेप । एवं सा नकुलं व्यापाद्य यावत्प्रलपन्ती गृह आगच्छति, तावत्सुतस्तथैव सुप्तस्तिष्ठति । समीपे कृष्णसर्पं खण्डशः कृतमवलोक्य पुत्रवधशोकेनात्मशिरो वक्षस्थलं च ताडयितुमारब्धा । अत्रान्तरे ब्राह्मणो [3]गृहीतनिर्वापः समायातो यावत्पश्यति, तावत्पुत्रशोकाभितप्ता ब्राह्मणी प्रलपति—'भो भो लोभात्मन्, लोभाभिभूतेन त्वया न कृतं

१ रुधिरेति रुधिरेण आप्लावितं लिप्तं वदनं मुखं यस्य तथाभूतः । २ स्वेति-स्वस्य आत्मनः व्यापारस्य शिशुसंरक्षणार्थं कृष्णसर्पेण सह सङ्ग्रामस्य प्रकाशनार्थम् । ३ गृहतेति-गृहीतः निर्वापः दानं येन तथाभूतः, प्राप्तभिक्ष इत्यर्थः ।

मद्वचः । तदनुभव सांप्रतं पुत्रमृत्युदुःखवृत्तफलम् । अथवा साध्विदमुच्यते—

अतिलोभो न कर्तव्यो लोभं नैव परित्यजेत् ।
अतिलोभाभिभूतस्य चक्रं भ्रमति मस्तके ॥ २२ ॥

ब्राह्मण आह—'कथमेतत् ।' सा प्राह—

## कथा (२)

कस्मिंश्चिदधिष्ठाने चत्वारो ब्राह्मणपुत्राः परस्परं मित्रतां गता वसन्ति स्म । ते चापि दारिद्र्योपहताः मन्त्रं चक्रुः—'अहो' धिगियं दरिद्रता । उक्तं च—

वरं वनं व्याघ्रगजादिसेवितं
जनेन हीनं बहुकण्टकावृतम् ।
तृणानि शय्या परिधानवल्कलं
न बन्धुमध्ये धनहीनजीवितम् ॥ २३ ॥

तथा च—

स्वामी द्वेष्टि सुसेवितोऽपि सहसा प्रोज्झन्ति सद्बान्धवा
राजन्ते न गुणास्त्यजन्ति तनुजाः स्फारीभवन्त्यापदः ।
भार्या साधु सुवंशजापि भजते नो यान्ति मित्राणि च
न्यायारोपितविक्रमाण्यपि नृणां येषां न हि स्याद्धनम् ॥२४॥

शूरः सुरूपः सुभगश्च वाग्मी
शस्त्राणि शास्त्राणि विदांकरोतु ।
अर्थं विना नैव यशश्च मानं
प्राप्नोति मर्त्योऽत्र मनुष्यलोके ॥ २५ ॥

तानीन्द्रियाण्यविकलानि तदेव नाम
सा बुद्धिरप्रतिहता वचनं तदेव ।

अर्थोष्मणा विरहितः पुरुषः स एव ।
वाह्यः क्षणेन भवतीति विचित्रमेतत् ॥ २६ ॥

तद्गच्छामः कुत्रचिदर्थाय ।' इति संमन्त्र्य स्वदेशं पुरं च स्वसुहृत्सहितं वान्धवयुतं गृहं च परित्यज्य प्रस्थिताः । अथवा साध्विदमुच्यते—

सत्यं परित्यजति मुञ्चति बन्धुवर्गं
शीघ्रं विहाय जननीमपि जन्मभूमिम् ।
संत्यज्य गच्छति विदेशमभीष्टलोकं
चिन्ताकुलीकृतमतिः पुरुषोऽत्र लोके ॥ २७ ॥

एवं क्रमेण गच्छन्तोऽवन्तीं[1] प्राप्ताः । तत्र [2]सिप्राजले कृतस्नाना [3]महाकालं प्रणम्य यावन्निर्गच्छन्ति, तावद्भैरवानन्दो नाम योगी संमुखो बभूव । ततस्तं ब्राह्मणोचितविधिना [3]संभाव्य तेनैव सह तस्य मठं जग्मुः । अथ तेन ते पृष्टाः—'कुतो भवन्तः समायाताः । क्व यास्यथ किं प्रयोजनम् ।' ततस्तैरभिहितम्—'वयं [4]सिद्धियात्रिकाः । तत्र यास्यामो यत्र धनाप्तिर्मृत्युर्वा भविष्यतीत्येव निश्चयः । उक्तं च—

दुष्प्राप्याणि बहूनि च लभ्यन्ते वाञ्छितानि द्रविणानि ।
अवसरतुलिताभिरलं तनुभिः साहसिकपुरुषाणाम् ॥ २८ ॥

---

१ अवन्तीनगरीम् । २ सिप्रेति-सिप्रानाम तत्रभवा काचन नदी तस्या जले । ३ महाकालं-महाकालाभिधं शङ्करम् । तथा च—

" आकाशे तारकं लिङ्गं पाताले हाटकेश्वरम् ।
मृत्युलोके महाकालं दृष्ट्वा मोक्षमवाप्नुयात् । "

३ सम्भाव्य-सत्कृत्य । ४ सिद्धियात्रिकाः सिद्धये कार्यसिद्धये यात्रा प्रयोजनं येषां ते, देहं पातयामि कार्यं वा साधयामीति निश्चयं कृत्वा कृतयात्रा इत्यर्थः ।

तथा च—

पतति कदाचिन्नभसः खाते पातालतोऽपि जलमेति ।
दैवमचिन्त्यं बलवद्बलवान्न तु पुरुषकारोऽपि ॥ २९ ॥
अभिमतसिद्धिरशेषा भवति हि पुरुषस्य पुरुषकारेण ।
दैवमिति यदपि कथयसि पुरुषगुणः सोऽप्यदृष्टाख्यः ॥३०॥
भयमतुलं गुरुलोकात्तृणमिव तुलयन्ति साधु साहसिकाः ।
प्राणानद्भुतमेतच्चरितं चरितं ह्युदाराणाम् ॥ ३१ ॥
क्लेशस्याङ्गमदत्त्वा सुखमेव सुखानि नेह लभ्यन्ते ।
मधुभिन्मथनायस्तैराश्लिष्यति बाहुभिर्लक्ष्मीम् ॥ ३२ ॥
तस्य कथं न चला स्यात्पत्नी विष्णोर्नृसिंहकस्यापि ।
मासांश्चतुरो निद्रां यः सेवति जलगतः सततम् ॥ ३३ ॥
दुरधिगमः परभागो यावत्पुरुषेण साहसं न कृतम् ।
जयति तुलामधिरूढो भास्वानिह जलदपटलानि ॥ ३४ ॥

तत्कथ्यतामस्माकं कश्चिद्धनोपायो [1]विवरप्रवेश-शाकिनी-साधनश्मशान-सेवन-महामांसविक्रय-साधकवर्तिप्रभृतीनामेक-

१ विवरेति-विवरप्रवेशः पातालाभिगमनं, मन्त्रौषधादिविविधैरुपायैः अभिरक्षितदेहस्य रत्नादिग्रहणार्थं नागलोकगमनमित्यर्थः, शाकिनीसाधनं-शाकिनीनामयोगिनीविशेषायाः साधनं अनुष्ठानादिपरिचर्यया वशीकरणं, स्मशानसेवनम् अर्द्धरात्रौ स्मशाने स्थित्वा मन्त्रादिसाधनं, महामांसस्य नरमांसस्य बलियोग्यस्य पुरुषस्य विक्रयः कापालिकेभ्यः मूल्यग्रहणपूर्वकम् अर्पणमित्यर्थः । कापालिकाश्च—इष्टदेवताप्रीत्यर्थं नर बलिदित्सवो भवन्ति, अतः बलि योग्यं नरं प्राप्य नररूपपशुदानोपकारविनिमयेन अद्भुतशक्तिमत्तया ते, विक्रेतृणाम् अत्यधिकधनादिदानेन प्रत्युपकारं कुर्वन्तीति महामांसविक्रयद्वारा धनार्जनं भवतीति भावः, साधकवर्तिः-साधिका-पृथिवीस्थ-निधिदर्शिका वर्तिः वर्तिकाविशेषः, एतेषां मध्ये एकतमः कश्चन अन्यतमः उपायः अभिधीयतामित्यर्थः ।

तम इति । अद्भुतशक्तिर्भवाञ्श्रूयते । वयमप्यतिसाहसिकाः । उक्तं च—

महान्त एव महतामर्थं साधयितुं क्षमाः ।
ऋते समुद्रादन्यः को बिभर्ति वडवानलम्' ॥ ३५ ॥

भैरवानन्दोऽपि तेषां सिद्ध्यर्थं बहूपायं सिद्धवर्तिचतुष्टयं कृत्वार्पयत् । आह च—'गम्यतां हिमालयदिशि । तत्र संप्राप्तानां यत्र वर्तिः पतिष्यति तत्र निधानमसन्दिग्धं प्राप्स्यथ । तत्र स्थानं खनित्वा निधिं गृहीत्वा [1]व्याघुट्यताम् । तथानुष्ठिते तेषां गच्छतामेकतमस्य हस्ताद्वर्तिनिपपात । अथासौ यावत्तं प्रदेशं खनति तावत्ताम्रमयी भूमिः । ततस्तेनाभिहितम्—'अहो' गृह्यतां स्वेच्छया ताम्रम् ।' अन्ये प्रोचुः—'भो मूढ, किमनेन क्रियते । तत्प्रभूतमपि दारिद्र्यं न नाशयति । तदुत्तिष्ठ । अग्रतो गच्छामः ।' सोऽब्रवीत्—'यान्तु भवन्तः । नाहमग्रे यास्यामि ।' एवमभिधाय ताम्रं यथेच्छया गृहीत्वा प्रथमो निवृत्तः । ते त्रयोऽप्यग्रे प्रस्थिताः । अथ किंचिन्मात्रं गतस्याग्रेसरस्य वर्तिर्निपपात । सोऽपि यावत्खनितुमारब्धस्तावद् रूप्यमयी क्षितिः । ततः प्रहर्षितः प्राह—'यद्भो भोः, गृह्यतां यथेच्छया रूप्यम् । नाग्रे गन्तव्यम् ' तावूचतुः—'भोः, पृष्ठतस्ताम्रमयी भूमिः, अग्रतो रूप्यमयी । तन्नूनमग्रे सुवर्णमयी भविष्यति । तदनेन प्रभूतेनापि दारिद्र्यनाशो न भवति । तदावामग्रे यास्यावः ।' एवमुक्त्वा द्वावप्यग्रे प्रस्थितौ । सोऽपि स्वशक्त्या रूप्यमादाय निवृत्तः । तयोरपि गच्छतोरेकस्याग्रे वर्तिः पपात । सोऽपि प्रहृष्टो यावत्खनति, तावत्सुवर्णभूमिं दृष्ट्वा द्वितीयं प्राह—'भोः, गृह्यतां स्वेच्छया सुवर्णम् । सुवर्णादन्यन्न किंचिदुत्तमं भविष्यति ।' स प्राह—'मूढ, न

१ व्याघुट्यतां प्रत्यागम्यताम् ।

किंचिद्वेत्सि। प्राक्ताम्रम्, ततो रूप्यम्, ततः सुवर्णम्। तन्नूनमतःपरं रत्नानि भविष्यन्ति। येषामेकतमेनापि दारिद्र्यनाशो भवति। तदुत्तिष्ठ। अग्रे गच्छावः। किमनेन भारभूतेनापि प्रभूतेन।' स आह—'गच्छतु भवान्। अहमत्र स्थितस्त्वां प्रतिपालयिष्यामि।' तथानुष्ठिते सोऽपि गच्छन्नेकाकी [1]ग्रीष्मार्कप्रतापसन्तप्ततनुः [2]पिपासाकुलितः [3]सिद्धिमार्गच्युत इतश्चेतश्च बभ्राम। अथ भ्राम्यन्स्थलोपरि पुरुषमेकं रुधिरप्लावितगात्रं [4]भ्रमच्चक्रमस्तकमपश्यत्। ततो द्रुततरं गत्वा तमवोचत्—'भोः, को भवान्। किमेवं चक्रेण भ्रमता शिरसि तिष्ठसि। तत्कथय मे यदि कुत्रचिज्जलमस्ति।' एवं तस्य प्रवदतस्तच्चक्रं तत्क्षणात्तस्य शिरसो ब्राह्मणमस्तके [5]चटितम्। स आह—'भद्र, किमेतत्।' स आह—'ममाप्येवमेवैतच्छिरसि चटितम्। स आह—'तत्कथय [6]कदैतदुत्तरिष्यति। महती मे वेदना वर्तते।' स आह—'यदा त्वमिव कश्चिद्धृतसिद्धवर्तिरेवमागत्य त्वामालापयिष्यति, तदा तस्य मस्तके चटिष्यति।' स आह—'कियान्कालस्तवैवं स्थितस्य।' स आह—'साम्प्रतं को राजा धरणीतले।' स आह—'वीणावत्सराजः।' स आह—'अहं तावत्कालसंख्यां न जानामि। परं यदा रामो राजासीत्तदाहं दारिद्र्योपहतः सिद्धवर्तिमादायानेन पथा समायातः। ततो मयान्यो नरो मस्तकधृतचक्रो दृष्टः पृष्टश्च। ततश्चैतज्ज्ञातम्।' स आह—'भद्र, कथं तवैवं स्थितस्य भोजनजलप्राप्तिरासीत्।' स आह—'भद्र, धनदेन निधान-

---

१ ग्रीष्मेति-ग्रीष्मार्कस्य निदाघसूर्यस्य प्रतापेन सन्तापेन सन्तप्ता तनुः शरीरं यस्य सः। २ पिपासाकुलितः-तृष्णापीडितः। ३ सिद्धिमार्गच्युतः सिद्धिपथाद् भ्रष्टः। ४ भ्रमदिति-भ्रमत् चक्रं यस्मिन् तथाभूतं मस्तकं यस्य सः तम्। ५ चटितं पतितम्।

हरणभयात्सिद्धानामेतच्चक्रपतनरूपं भयं दर्शितम् । तेन कश्चिदपि नागच्छति । यदि कश्चिदायाति स क्षुत्पिपासानिद्रारहितो जरामरणवर्जितः केवलमेवं वेदनामनुभवतीति । तदापृच्छय मां स्वगृहाय ।' इत्युक्त्वा गतः । अथ तस्मिंश्चिरयति स सुवर्णसिद्धिस्तस्यान्वेषणपरस्तत्पदपङ्क्त्या यावत्किंचिद्वनान्तरमागच्छति, तावद्रुधिरप्लावितशरीरस्तीक्ष्णचक्रेण मस्तके भ्रमता सवेदनः क्वणन्नुपविष्टस्तिष्ठतीति ददर्श । तत्समीपवर्तिना भूत्वा सबाष्पं पृष्टः—'भद्र, किमेतत् ।' स आह—विधिनियोगः ।' स आह—'कथं तत् । कथय कारणमेतस्य ।' सोऽपि तेन पृष्टः सर्वं चक्रवृत्तान्तमकथयत् । तच्छ्रुत्वासौ तं विगर्हयन्निदमाह 'भोः निषिद्धस्त्वं मयानेकशो न शृणोषि मे वाक्यम् । तत्किं क्रियते । विद्यावानपि कुलीनोऽपि बुद्धिरहितः । अथवा साध्विदमुच्यते—

वरं बुद्धिर्न सा विद्या विद्याया बुद्धिरुत्तमा ।
बुद्धिहीना विनश्यन्ति यथा ते सिंहकारकाः ॥ ३६ ॥

चक्रधर आह—'कथमेतत् ॥' सुवर्णसिद्धिराह—

## कथा ( ३ )

कस्मिंश्चिदधिष्ठाने चत्वारो ब्राह्मणपुत्राः परस्परं मित्रभावमुपगता वसन्ति स्म । तेषां त्रयः शास्त्रपारंगताः, परन्तु बुद्धिरहिताः । एकस्तु बुद्धिमान्, केवलं शास्त्रपराङ्मुखः । अथ तैः कदाचिन्मित्रैर्मन्त्रितम्—'को गुणो विद्याया येन देशान्तरं गत्वा भूपतीन्परितोष्यार्थोपार्जना न क्रियते । तत्पूर्वदेशं गच्छामः ।' तथानुष्ठिते किंचिन्मार्गं गत्वा तेषां ज्येष्ठतरः प्राह—'अहो, अस्माकमेकश्चतुर्थो मूढः केवलं बुद्धिमान् । न

च राजप्रतिग्रहो बुद्धया लभ्यते विद्यां विना। तन्नास्मै स्वोपार्जितं दास्यामि तद्गच्छतु गृहम्। ततो द्वितीयेनाभिहितम्—'भोः, सुबुद्ध, गच्छ त्वं स्वगृहे, यतस्ते विद्या नास्ति।' ततस्तृतीयेणाभिहितम्—'अहो, न युज्यत एवं कर्तुम्। यतो वयं बाल्यात्प्रभृत्येकत्र क्रीडिताः। तदागच्छतु महानुभावोऽस्मदुपार्जितवित्तस्य समभागी भविष्यतीति। उक्तं च—

किं तया क्रियते लक्ष्म्या या वधूरिव केवला।
या न वेश्येव सामान्या पथिकैरुपभुज्यते ॥ ३७ ॥

तथा च—

अयं निजः परोवेति गणना लघुचेतसाम्।
उदारचरितानां तु वसुधैव कुटुम्बकम् ॥ ३८ ॥

तद् आगच्छतु एषोऽपि' इति। तथा अनुष्ठिते, तैः मार्गाश्रितैः अटव्यां कतिचिद् अस्थीनि दृष्टानि। ततश्च एकेन अभिहितम्—"अहो! अद्य विद्याप्रत्ययः क्रियते, कतिचिद् एतानि मृतसत्त्वस्य अस्थीनि तिष्ठन्ति, तद् विद्याप्रभावेण जीवनसहितं कुर्मः, अहम् अस्थिसञ्चयं करोमि। ततश्च तेन औत्सुक्याद् अस्थि संचयः कृतः। द्वितीयेन चर्ममांसरुधिरं संयोजितम्। तृतीयोऽपि यावज्जीवनं संचारयति, तावत्सुबुद्धिना निषिद्धः—'भोः, तिष्ठतु भवान्। एष सिंहो निष्पाद्यते। यद्येनं सजीवं करिष्यति ततः सर्वानपि व्यापादयिष्यति।' इति तेनाभिहितः स आह—'धिङ् मूर्ख, नाहं विद्याया विफलतां करोमि।' ततस्तेनाभिहितम्—'तर्हि प्रतीक्षस्व क्षणं यावदहं वृक्षमारोहामि।' तथानुष्ठिते यावत्सजीवः कृतस्तावत्ते त्रयोऽपि सिंहेनोत्थाय व्यापादिताः। स च पुनर्वृक्षादवतीर्य गृहे गतः। अतोऽहं ब्रवीमि—'वरं बुद्धिर्न सा विद्या' इति ॥ अतः परमुक्तं च—

अपि शास्त्रेषु कुशला लोकाचारविवर्जिताः ।
सर्वे ते हास्यतां यान्ति यथा ते मूर्खपण्डिताः ॥ ३६ ॥

चक्रधर आह—कथमेतत् । सोऽब्रवीत्—

## कथा ( ४ )

कस्मिंश्चिदधिष्ठाने चत्वारो ब्राह्मणाः परस्परं मित्रत्वमापन्ना वसन्ति स्म । बालभावे तेषां मतिरजायत—'भोः, देशान्तरं गत्वा विद्याया उपार्जनं क्रियते' इति । अथान्यस्मिन्दिवसे ब्राह्मणाः परस्परं निश्चयं कृत्वा विद्योपार्जनार्थं कान्यकुब्जे गताः । तत्र च विद्यामठे गत्वा पठन्ति । एवं द्वादशाब्दान् यावदेकचित्ततया विद्याकुशलास्ते सर्वे संजाताः, ततस्तैश्चतुर्भिर्मिलित्वोक्तम्—"वयं सर्वविद्यापारे गताः । तदुपाध्यायमुत्कलापयित्वा[1] स्वदेशे गच्छामः ।" एवं मन्त्रयित्वा ब्राह्मणा उपाध्यायमुत्कलापयित्वानुज्ञां लब्ध्वा पुस्तकानि नीत्वा प्रचलिता यावत्किञ्चिन्मार्गं यान्ति तावद् द्वौ पन्थानौ समायातौ दृष्ट्वा उपविष्टाः सर्वे । तत्रैकः प्रोवाच—'केन मार्गेण गच्छामः ।' एतस्मिन्समये तस्मिन्पत्तने कश्चिद्वणिक्पुत्रो मृतः । तस्य दाहार्थं महाजनो गतोऽभूत् । ततश्चतुर्णां मध्यादेकेन पुस्तकमवलोकितम्—

'महाजनो येन गतः स पन्थाः ।'

इति । तन्महाजनमार्गेण गच्छामः ।' अथ ते पण्डिता यावन्महाजनमेलापथिकेन[2] सह यान्ति तावद्रासभः कश्चित्तत्र श्मशाने दृष्टः । अथ द्वितीयेन पुस्तकमुद्घाट्यावलोकितम्—

---

१ उत्केन विद्याधिगमानन्तरं शिष्याणां स्वदेशगमनाद् उन्मनस्केन गुरुणा सह यो लापः अनुमतिप्रार्थनारूपं भाषणं तत् कृत्वेत्यर्थः ।

२ महाजनेति-महाजनानां मेला मिलनमित्यर्थः, तस्य पन्थाः मार्गः तं गच्छति यः स महाजनमेलापथिकः तेन ।

उत्सवे व्यसने प्राप्ते दुर्भिक्षे शत्रुसंकटे ।
राजद्वारे श्मशाने च यस्तिष्ठति स बान्धवः ॥ ४० ॥

तदहो, अयमस्मदीयो बान्धवः ।' ततः कश्चित्तस्य ग्रीवायां लगति । कोऽपि पादौ प्रक्षालयति । अथ यावत्ते पण्डिताः दिशामवलोकनं कुर्वन्ति, तावत्कश्चिदुष्ट्रो दृष्टः । तैश्चोक्तम्—'एतत्किम् ।' तावत्तृतीयेन पुस्तकमुद्धाट्योक्तम्—

'धर्मस्य त्वरिता गतिः ।'

तन्नूनमेष धर्मस्तावत् ।' चतुर्थेनोक्तम्—

'इष्टं धर्मेण योजयेत् ।'

'तद् बान्धवोऽयमस्माकं धर्मेण नियुज्यताम् ।' अथ तैश्च रासभ उष्ट्रग्रीवायां बद्धः । तत्तु केनचित्तत्स्वामिनो रजकस्याग्रे कथितम् । श्रुत्वा च यावद्रजकस्तेषां मूर्खपण्डितानां प्रहारकरणाय समायातस्तावत्ते प्रनष्टाः । ततः यावदग्रे किंचित्स्तोकं मार्गं यान्ति, तावत्काचिन्नदी समासादिता । तत्तस्या जलमध्ये पलाशपत्रमायातं दृष्ट्वा पण्डितेनैकेनोक्तम्—

'आगमिष्यति यत्पत्रं तदस्मांस्तारयिष्यति ।'

एतत्कथयित्वा तत्पत्रस्योपरि पतितो यावन्नद्या नीयते, तावत्तं नीयमानमवलोक्यान्येन पण्डितेन केशान्तं गृहीत्वोक्तम्—

'सर्वनाशे समुत्पन्ने अर्धं त्यजति पण्डितः ।
अर्धेन कुरुते कार्यं सर्वनाशो हि दुःसहः ॥ ४१ ॥'

इत्युक्त्वा तस्य शिरश्छेदो विहितः । अथ तैश्च पश्चाद्गत्वा कश्चिद् ग्राम आसादितः । तेऽपि ग्रामीणैर्निमन्त्रिताः पृथक्पृथग्गृहेषु नीताः । तत एकस्य [1]सूत्रिका घृतखण्डसंयुक्ता भोजने दत्ता । ततो विचिन्त्य पण्डितेनोक्तम्—'यत्—

१ सूत्रिका, भाषायां "सेवई" इति कथ्यते ।

'दीर्घसूत्री विनश्यति ।'

एवमुक्त्वा भोजनं परित्यज्य गतः । तथा द्वितीयस्य [1]मण्डकाः दत्ताः । तेनाप्युक्तम्—

'अतिविस्स्तारविस्तीर्णं तद्भवेन्न चिरायुषम् ।'

स च भोजनं त्यक्त्वा गतः । अथ तृतीयस्य [2]वटिकाभोजनं दत्तम् । तत्रापि पण्डितेनोक्तम्—

'छिद्रेष्वनर्था बहुलीभवन्ति ।'

एवं ते त्रयोऽपि पण्डिताः क्षुत्क्षामकण्ठा लोकैर्हास्यमानास्ततः स्थानात्स्वदेशं गताः ।" अथ सुवर्णसिद्धिराह— 'यत्त्वं लोकव्यवहारमजानन्मया वार्यमाणोऽपि न स्थितः, तत ईदृशीमवस्थामुपगतः । अतोऽहं ब्रवीमि—'अपि शास्त्रेषु कुशलाः' इति ॥' तच्छ्रुत्वा चक्रधर आह—'अहो, अकारणमेतत् ।

सुबुद्धयोऽपि नश्यन्ति दुष्टदैवेन नाशिताः ।
स्वल्पधीरपि तस्मिंस्तु कुले नन्दति संततम् ॥ ४१ ॥

उक्तं च—

अरक्षितं तिष्ठति दैवरक्षितं
सुरक्षितं दैवहतं विनश्यति ।
जीवत्यनाथोऽपि वने विसर्जितः
कृतप्रयत्नोऽपि गृहे न जीवति ॥ ४२ ॥

तथा च—

शतबुद्धिः शिरस्थोऽयं लम्बते च सहस्रधीः ।
एकबुद्धिरहं भद्रे क्रीडामि विमले जले ॥ ४३ ॥'

सुवर्णसिद्धिराह—'कथमेतत् ।' स आह—

---

१ मण्डकाः-माधुर्याम्लरससंयुक्तो मृदुना वह्निना साध्योऽन्नस्य क्वाथः । २ वटिकाभोजनं भाषायां " बड़ा " इति कथ्यते ।

# कथा ( ५ )

कस्मिंश्चिज्जलाशये शतबुद्धिः सहस्रबुद्धिश्च द्वौ मत्स्यौ निवसतः स्म। अथ तयोरेकबुद्धिर्नाम मण्डूको मित्रतां गतः। एवं ते त्रयोऽपि वेलायां[1] कञ्चित्कालं सुभाषितगोष्ठीसुखमनुभूय भूयोऽपि सलिलं प्रविशन्ति। अथ कदाचित्तेषां [2]गोष्ठीगतानां जालहस्तधीवराः प्रभूतैर्मत्स्यैर्व्यापादितैर्मस्तके विधृतैरस्तमनवेलायां तस्मिञ्जलाशये समायाताः। ततः सलिलाशयं दृष्ट्वा मिथः प्रोचुः—बहुमत्स्योऽयं ह्रदो दृश्यते, स्वल्पसलिलश्च। तत्प्रभातेऽत्रागमिष्यामः।' एवमुक्त्वा स्वगृहं गताः। मत्स्याश्च विषण्णवदना मिथो मन्त्रं चक्रुः। ततो मण्डूक आह—'भोः शतबुद्धे, श्रुतं धीवरोक्तं भवता। तत्किमत्र युज्यते कर्तुम्। पलायनमवष्टम्भो[3] वा। यत्कर्तुं युक्तं भवति तदादिश्यतामद्य।' तच्छ्रुत्वा सहस्रबुद्धिः प्रहस्य आह—'भो मित्र, मा भैषीः। यतो वचनस्मरणमात्रादेव भयं न कार्यम्। उक्तं च—

सर्पाणां च खलानां च सर्वेषां दुष्टचेतसाम्।
अभिप्राया न सिध्यन्ति तेनेदं वर्तते जगत्॥ ४४॥

तत्तावत्तेषामागमनमपि न संपत्स्यते। भविष्यति वा तर्हि त्वां बुद्धिप्रभावेणात्मसहितं रक्षयिष्यामि। यतोऽनेकां [4]सलिलगतिचर्यामहं जानामि।' तदाकर्ण्य शतबुद्धिराह—'भोः, युक्तमुक्तं भवता। सहस्रबुद्धिरेव भवान्। अथवा साध्विदमुच्यते—

---

१ वेलायां जलतीरे। २ गोष्ठीगतानां सभागतानाम्। ३ अवष्टम्भः स्तब्धीभूय गुप्तभावेनावस्थानम्। ४ सलिलगतिचर्य्यां विविधोपायां विहरणप्रक्रियाम्।

बुद्धेर्बुद्धिमतां लोके नास्त्यगम्यं हि किंचन ।
बुद्ध्या यतो हता नन्दाश्चाणक्येनासिपाणयः ॥ ४५ ॥

तथा च—

न यत्रास्ति गतिर्वायो रश्मीनां च विवस्वतः ।
तत्रापि प्रविशत्याशु बुद्धिर्बुद्धिमतां सदा ॥ ४६ ॥

ततो वचनश्रवणमात्रादपि [1]पितृपर्यायागतं जन्मस्थानं त्यक्तुं न शक्यते । उक्तं च—

न तत्स्वर्गेऽपि सौख्यं स्याद्दिव्यस्पर्शनशोभने ।
कुस्थानेऽपि भवेत्पुंसां जन्मनो यत्र संभवः ॥ ४७ ॥

तन्न कदाचिदपि गन्तव्यम् । अहं त्वां सुबुद्धिप्रभावेण रक्षयिष्यामि ।' मण्डूक आह—भद्रौ, मम तावदेकैव बुद्धिः पलायनपरा । तदहमन्यं जलाशयमद्यैव सभार्यो यास्यामि ।' एवमुक्त्वा स मण्डूको रात्रावेवान्यजलाशयं गतः । [2]धीवरैरपि प्रभात आगत्य [3]जघन्यमध्यमोत्तमजलचरा मत्स्यकूर्ममण्डूककर्कटादयो गृहीताः । तावपि शतबुद्धिसहस्रबुद्धी सभार्यौ पलायमानौ चिरमात्मानं गतिविशेषविज्ञानैः कुटिलचारेण रक्षन्तौ अपि जाले पतितौ व्यापादितौ च । अथापराह्णसमये प्रहृष्टास्ते धीवराः स्वगृहं प्रति प्रस्थिताः । गुरुत्वाच्चैकेन शतबुद्धिः स्कन्धे कृतः । सहस्रबुद्धिः प्रलम्बमानो नीयते । ततश्च [4]वापीकण्ठोपगतेन मण्डूकेन तौ तथा नीयमानौ दृष्ट्वाभिहिता स्वपत्नी—'प्रिये, पश्य पश्य—

---

१ पितृपर्यायागतं पितृपरम्पराप्राप्तम् । २ धीवरैः जालजीविभिः (मल्लाह) । ३ जघन्या अधमाः, मध्यमाः साधारणाः, उत्तमा उत्कृष्टाः जलचराः । ४ वापीति-वाप्याः दीर्घिकायाः ( बावली ) कण्ठः समीपम् उपगतेन प्राप्तेन ।

शतबुद्धिः शिरस्थोऽयं लम्बते च सहस्रधीः ।
एकबुद्धिरहं भद्रे क्रीडामि विमले जले ॥ ४८ ॥'

अतश्च "वरं बुद्धिर्नसा विद्या" इत्यादि यद् भवता उक्तं, तत्रेयं मे मतिः यत् [1]नैकान्ते बुद्धिरपि प्रमाणम् ।" सुवर्णसिद्धिः प्राह-"यद्यपि एतदस्ति, तथापि मित्रवचनं न लङ्घनीयम् । परं किं क्रियते, निवारितोऽपि मया न स्थितोऽतिलौल्यात् विद्याहङ्कारात्च । अथवा साधु इदमुच्यते ।

साधु मातुल गीतेन मया प्रोक्तोऽपि न स्थितः ।
अपूर्वोऽयं मणिर्बद्धः संप्राप्तं गीतलक्षणम्" ॥ ४९ ॥

चक्रधर आह—'कथमेतत् ।' सोऽब्रवीत्—

## कथा ( ६ )

कस्मिंश्चिदधिष्ठान उद्धतो नाम गर्दभः प्रतिवसति स्म । स सदैव रजकगृहे भारोद्वहनं कृत्वा रात्रौ स्वेच्छया पर्यटति । ततः प्रत्यूषे बन्धनभयात्स्वयमेव रजकगृहमायाति । रजकोऽपि ततस्तं बन्धनेन नियुनक्ति । अथ तस्य रात्रौ पर्यटतः क्षेत्राणि कदाचिच्छृगालेन सह मैत्री संजाता । स च [2]पीवरत्वाद् [3]वृतिभङ्गं कृत्वा कर्कटिकाक्षेत्रे शृगालसहितः प्रविशति । एवं तौ यदृच्छया [4]चिर्भटिकाभक्षणं कृत्वा प्रत्यहं प्रत्यूषे स्वस्थानं व्रजतः । अथ कदाचित्तेन मदोद्धतेन रासभेन क्षेत्रमध्यस्थितेन शृगालोऽभिहितः—'भो भगिनीसुत, पश्य पश्य, अतीव निर्मला रजनी । तदहं गीतं करिष्यामि । तत्कथय कतमेन

---

१ एकान्ते एकान्ततः केवलं बुद्धिरेव प्रमाणतया न गण्यते । २ स्थूलशरीरत्वात् । ३ वृतिभङ्गं काष्ठेष्टकादिकृतप्राचीरभेदम् । ४ चिर्भटिका कर्कटिका भाषायां "ककडी" अथवा "खीरा" इति कथ्यते ।

रागेण करोमि।' स आह—'माम, किमनेन वृथानर्थप्रचालनेन[1]। यतश्चौरकर्मप्रवृत्तावावां निभृतैश्च[2] चौरजारैरत्र[3] स्थातव्यम्। उक्तं च—

कासयुक्तस्त्यजेच्चौर्यं निद्रालुश्चेत्स चौरिकाम्।
जिह्वालौल्यं रुजाक्रान्तो जीवितं योऽत्र वाञ्छति ॥ ५० ॥

अपरं त्वदीयं गीतं न मधुरस्वरम्। शङ्खशब्दानुकारं दूरादपि श्रूयते। तदत्र क्षेत्रे रक्षापुरुषाः सुप्ताः सन्ति। त उत्थाय वधं बन्धं वा करिष्यन्ति। तद्भक्षय तावदमृतमयीश्चिर्भटीः। मा त्वमत्र गीतव्यापारपरो भव। तच्छ्रुत्वा रासभ आह—'भोः, वनाश्रयत्वात्त्वं गीतरसं न वेत्सि। तेनैतद् ब्रवीषि। उक्तं च—

शरज्ज्योत्स्नाहते दूरं तमसि प्रियसन्निधौ।
धन्यानां विशति श्रोत्रे गीतझङ्कारजा सुधा' ॥ ५१ ॥

शृगाल आह—'माम, अस्त्येतत्। परं न वेत्सि त्वं गीतम्। केवलमुन्नदसि[4]। तत्किं तेन स्वार्थभ्रंशकेन[5]।' रासभ आह—धिग्धिङ्मूर्ख, किमहं न जानामि गीतम्। तद्यथा तस्य भेदाः शृणु—

सप्त स्वरास्त्रयो ग्रामा मूर्च्छनाश्चैकविंशतिः।
तालास्त्वेकोनपञ्चाशत्तिस्रो मात्रा लयास्त्रयः ॥ ५२ ॥
स्थानत्रयं यतिपञ्च षडास्यानि रसा नव।
रागाः षट्त्रिंशतिर्भावाश्चत्वारिंशत्ततः स्मृताः' ॥ ५३ ॥

---

१ अनर्थेति अनर्थानाम् आपत्तीनां प्रचालनं आहूय आनयनमित्यर्थः, तेन। २ निभृतैः शब्दरहितैः। ३ संसारे। ४ केवलम् उन्नदसि श्रवणकटुना स्वरेण उच्चैः शब्दायसे। ५ स्वार्थेति-स्वकार्यध्वंसकेन।

पञ्चाशीत्यधिकं ह्येतद्गीताङ्गानां शतं स्मृतम् ।
स्वयमेव पुरा प्रोक्तं भरतेन श्रुतेः परम् ॥ ५४ ॥
नान्यद् गीतात्प्रियं लोके देवानामपि दृश्यते ।
शुष्कस्नायुस्वराह्लादात्त्र्यक्षं जग्राह रावणः ॥ ५५ ॥

तत्कथं भगिनीसुत, मामनभिज्ञं वदन्निवारयसि ।' शृगाल आह—'माम, यद्येवं तदहं तावद् [1]वृतेर्द्वारस्थितः क्षेत्रपालमवलोकयामि । त्वं पुनः स्वेच्छया गीतं कुरु ।' तथानुष्ठिते [2] रासभरटनमाकर्ण्य क्षेत्रपः[3] क्रोधाद्दन्ता [4]न्घर्षयन्प्रधावितः । यावद्रासभो दृष्टस्तावल्लगुडप्रहारैस्तथाहतः, यथा प्रताडितो भूपृष्ठे पतितः । ततश्च सच्छिद्रमुदूखलं[5] गले बद्ध्वा क्षेत्रपालः प्रसुप्तः । रासभोऽपि स्वजातिस्वभावाद्गतवेदनः क्षणेनाभ्युत्थितः । उक्तं च—

सारमेयस्य चाश्वस्य रासभस्य विशेषतः ।
मुहूर्तात्परतो न स्यात्प्रहारजनिता व्यथा ॥ ५६ ॥

ततस्तमेवोलूखलमादाय वृतिं चूर्णयित्वा पलायितुमारब्धः । अत्रान्तरे शृगालोऽपि दूरादेव तं दृष्ट्वा सस्मितमाह—

साधु मातुल गीतेन मया प्रोक्तोऽपि न स्थितः ।
अपूर्वोऽयं मणिर्बद्धः संप्राप्तं गीतलक्षणम् ॥ ५७ ॥

तद्भवानपि मया वार्यमाणोऽपि न स्थितः[6] ।' तच्छ्रुत्वा चक्रधर आह—'भो मित्र, सत्यमेतत् । अथवा साध्विदमुच्यते—

---

१ वृतेः प्राचीरस्य (चारो ओर से मैदान को घेरना) । २ रासभरटनम्- ३ क्षेत्रपः-क्षेत्रपतिः । गर्दभचीत्कारम् । ४ दशन्नित्यर्थः । ५ उदूखलं धान्यादिकण्डनहेतुभूतं काष्ठमयं पात्रम् । ६ मद्वचनं न श्रुतवानितिभावः ।

यस्य नास्ति स्वयं प्रज्ञा मित्रोक्तं न करोति यः ।
स एव निधनं याति यथा मन्थरकौलिकः ॥ ५८ ॥

सुवर्णसिद्धिराह—'कथमेतत् ।' सोऽब्रवीत्—

## कथा (७)

कस्मिंश्चिदधिष्ठाने मन्थरको नाम [1]कौलिकः प्रतिवसति स्म । तस्य कदाचित् [2]पट्टकर्माणि कुर्वतः सर्वपट्टकर्मकाष्ठानि[3] भग्नानि । ततः स कुठारमादाय वने काष्ठार्थं गतः । स च समुद्रतटं यावद् भ्रमन्प्रयातः, तावत् [4]तत्र शिंशपापादपस्तेन दृष्टः । ततश्चिन्तितवान्—महानयं वृक्षो दृश्यते । तदनेन कर्त्तितेन प्रभूतानि पट्टकर्मोपकरणानि भविष्यन्ति ।' इत्यवधार्य तस्योपरि कुठारमुत्क्षिप्तवान् । अथ तत्र वृक्षे कश्चिद्व्यन्तरः[5] समाश्रित आसीत् । अथ तेनाभिहितम्—'भोः, मदाश्रयोऽयं पादपः सर्वथा रक्षणीयः, यतोऽहमत्र महासौख्येन तिष्ठामि समुद्रकल्लोलस्पर्शनाच्छीतवायुनाप्यायितः[6] ।' कौलिक आह—'भोः, किमहं करोमि । दारुसामग्रीं विना मे कुटुम्बकदम्बं[7] बुभुक्षया पीड्यते । तस्मादन्यत्र शीघ्रं गम्यताम् अहमेनं कर्त्तयिष्यामि ।' व्यन्तर आह-'भोः, तुष्टस्तवाहम् । तत्प्रार्थ्यतामभीष्टं किंचित् । रक्षैनं पादपम्' इति । कौलिक आह—'यद्येवं तदहं स्वगृहं गत्वा स्वमित्रं स्वभार्यां च

१ कौलिकः तन्तुवायः (जुलाहा) । २ पट्टकर्माणि वस्त्रवयनकार्याणि । ३ सर्वेति सर्वाणि पट्टकर्मकाष्ठानि वस्त्रवयनयन्त्रकाष्ठानि । ४ शिंशपापादपः ( सीसों का पेड़ ) । ५ व्यन्तरः अद्भुतशक्तिसम्पन्नः कश्चिद् देवयोनिविशेषः । ६ प्रीणितः । ७ कुटुम्बकदम्बं कुटुम्बवर्गः ।

पृष्ट्वागमिष्यामि । ततस्त्वया देयम् ।' अथ 'तथा' इति प्रतिज्ञाते व्यन्तरेण स कौलिकः प्रहृष्टः स्वगृहं प्रतिनिवृत्तः । यावदग्रे गच्छति तावद् ग्रामप्रवेशे निजसुहृदं नापितमपश्यत् । ततस्तस्य व्यन्तरवाक्यं निवेदयामास—'यदहो मित्र, मम कश्चिद्व्यन्तरः सिद्धः । तत्कथय किं प्रार्थये । अहं त्वां प्रष्टुमागतः ।' नापित आह—'भद्र, यद्येवं तद्राज्यं प्रार्थय । येन त्वं राजा भवसि, अहञ्च त्वन्मन्त्री । द्वावपीह सुखमनुभूय परलोकसुखमनुभवावः । उक्तं च—

राजा दानपरो नित्यमिह कीर्तिमवाप्य च ।
तत्प्रभावात्पुनः स्वर्गे स्पर्धते त्रिदशैः सह ॥ ५९ ॥

कौलिक आह—'अस्त्येतत्परम्, तथापि गृहिणीं पृच्छामि ।' स आह—'भद्र' शास्त्रविरुद्धमेतद्यत्स्त्रिया सह मन्त्रः, यतस्ताः स्वल्पमतयो भवन्ति । उक्तं च—

भोजनाच्छादने दद्यादृतुकाले च संगमम् ।
भूषणाद्यं च नारीणां न ताभिर्मन्त्रयेत्सुधीः ॥ ६० ॥
यत्र स्त्री यत्र कितवो बालो यत्र प्रशासिता ।
तद् गृहं क्षयमायाति भार्गवो हीदमब्रवीत् ॥ ६१ ॥
तावत्स्यात्सुप्रसन्नास्यस्तावद् गुरुजने रतिः ।
पुरुषो योषितां यावन्न शृणोति वचो रहः ॥ ६२ ॥
एताः स्वार्थपरा नार्यः केवलं स्वसुखे रताः ।
न तासां वल्लभः कोऽपि सुतोऽपि स्वसुखं विना ॥ ६३ ॥

कौलिक आह—'तथापि प्रष्टव्या सा मया । यतः पतिव्रता[1]

---

१ पतिव्रता—

"आर्तार्ते मुदिते हृष्टा प्रोषिते मलिना कृशा ।
मृते म्रियेत या पत्युः सा स्त्री ज्ञेया पतिव्रता ॥

सा । अपरं तामपृष्ट्वाहं न किंचित्करोमि ।' एवं तमभिधाय सत्वरं गत्वा तामुवाच—'प्रिये, अद्यास्माकं कश्चिद्व्यन्तरः सिद्धः । स वाञ्छितं प्रयच्छति । तदहं त्वां प्रष्टुमागतः । तत्कथय किं प्रार्थये । एष तावन्मम मित्रं नापितो वदत्येवं यद्राज्यं प्रार्थयस्व ।' साह—'आर्यपुत्र, का मतिर्नापितानाम् । तन्न कार्यं तद्वचः । उक्तं च—

चारणैर्वन्दिभिर्नीचैर्नापितैर्बालकैरपि ।
न मन्त्रं मतिमान्कुर्यात्सार्धं भिक्षुभिरेव च ॥ ६४ ॥

अपरं महती [1]क्लेशपरम्परैषा राज्यस्थितिः संधिविग्रहयानासनसंश्रयद्वैधीभावादिभिः कदाचित्पुरुषस्य सुखं न प्रयच्छतीति । यतः—

यदैव राज्ये क्रियतेऽभिषेक-
स्तदैव याति व्यसनेषु बुद्धिः ।
घटा नृपाणामभिषेककाले
सहाम्भसैवापदमुद्गिरन्ति ॥ ६५ ॥

---

१ क्लेशपरम्परा धारावाहिदुःखप्रसवित्री राज्यस्थितिः, तथाहि-सन्धीति-सन्धिः बलवता राज्ञा गृहीतेन नृपेण भूयो यावत् स्वशक्तिसञ्चयो न भवति तावत् कालयापनार्थं निर्धारितेन पणबन्धेन सम्मेलनम् । विग्रहः युद्धम्, यानं-बलवीर्यविशिष्टस्य विजिगीषोः नृपस्य शत्रुं प्रति यात्रा, आसनं-शत्रोः विजिगीषोः राज्ञश्च उभयोरपि समानबलवत्वाद् उपेक्षया अवस्थानम्, संश्रयः-प्रबलेन राज्ञा स्वदेशात् निराकृतस्य प्रतीकारेऽसमर्थस्य च राज्ञः निजशत्रोः बलवतः अन्यस्य कस्यचन राज्ञः समाश्रयणम् । द्वैधीभावः-शक्तिशालिनोः द्वयोः राज्ञोः समीपे "अहं मम राज्यञ्च तवैव अधीनम्" इति केवलं वाचा उक्त्वा स्वयम् आत्मसंरक्षणार्थं दुर्गाश्रयणम् ।

तथा च—

रामस्य व्रजनं वने निवसनं पाण्डोः सुतानां वनं
वृष्णीनां निधनं नलस्य नृपते राज्यात्परिभ्रंशनम् ।
सौदासं तदवस्थमर्जुनवधं संचिन्त्य लङ्केश्वरं
दृष्ट्वा राज्यकृते विडम्बनगतं तस्मान्न तद्वाञ्छयेत् ॥
यदर्थं भ्रातरः पुत्रा अपि वाञ्छन्ति ये निजाः ।
वधं राज्यकृतां राज्ञां तद्राज्यं दूरतस्त्यजेत् ॥ ६७ ॥

कौलिक आह—'सत्यमुक्तं भवत्या । तत्कथय किं प्रार्थये । साह—'त्वं तावदेकं पटं नित्यमेव निष्पादयसि । तेन सर्वा [1]व्ययशुद्धिः संपद्यते । इदानीं त्वमात्मनोऽन्यद्बाहुयुगलं द्वितीयं शिरश्च याचस्व । येन पटद्वयं संपादयसि पुरतः पृष्ठतश्च । एकस्य मूल्येन गृहे यथापूर्वं व्ययं संपादयिष्यसि । द्वितीयस्य मूल्येन विशेषकृत्यानि करिष्यसि । एवं सौख्येन स्वजातिमध्ये श्लाघ्यमानस्य कालो यास्यति । [2]लोकद्वयस्योपार्जना भविष्यति । सोऽपि तदाकर्ण्य प्रहृष्टः प्राह—'साधु पतिव्रते, साधु । युक्तमुक्तं भवत्या । तदेवं करिष्यामि । एष मे निश्चयः।' ततोऽसौ गत्वा व्यन्तरं प्रार्थयाञ्चक्रे—'भोः, यदि ममेप्सितं प्रयच्छसि, तद्देहि मे द्वितीयं बाहुयुगलं शिरश्च ।' एवमभिहिते तत्क्षणादेव द्विशिराश्चतुर्बाहुश्च संजातः । ततो हृष्टमना यावद् गृहमागच्छति, तावल्लोकैः राक्षसोऽयमिति मन्यमानैर्लगुड-पाषाणप्रहारैस्ताडितो मृतश्च । अतोऽहं ब्रवीमि—'यस्य नास्ति स्वयं प्रज्ञा' इति । चक्रधर आह—'भोः, सत्यमेतत् । सर्वोऽपि जनोऽश्रद्धेयामाशापिशाचिकां[3] प्राप्य हास्यपदवीं याति । अथवा साध्विदमुच्यते केनापि—

---

१ व्ययनिर्वाहः । २ इहलोकस्य परलोकस्य च ।
३ अश्रद्धेयामिति श्रद्धानर्हां तृष्णास्वरूपां पिशाचीम् ।

अनागतवतीं चिन्तामसंभाव्यां करोति यः ।
स एव पाण्डुरः शेते सोमशर्मपिता यथा ॥ ६८ ॥

सुवर्णसिद्धिराह—'कथमेतत्'। सोऽब्रवीत्—

## कथा ( ८ )

कस्मिंश्चिन्नगरे कश्चित्स्वभावकृपणो नाम ब्राह्मणः प्रतिवसति स्म। तेन भिक्षार्जितैः [1]सक्तुभिर्भुक्तशेषैः[2] कलशः संपूरितः। तं च घटं[3] नागदन्तेऽवलम्ब्य तस्याधस्तात्खट्वां निधाय सततमेकदृष्ट्या तमवलोकयति। अथ कदाचिद्रात्रौ सुप्तश्चिन्तयामास—'यत्परिपूर्णोऽयं घटस्तावत्सक्तुभिर्वर्तते। तद्यदि दुर्भिक्षं भवति तदनेन रूपकाणां शतमुत्पद्यते। ततस्तेन मयाजाद्वयं ग्रहीतव्यम्। ततः षाण्मासिकप्रसववशात्ताभ्यां यूथं भविष्यति। ततोऽजाभिः प्रभूता गा ग्रहीष्यामि। गोभिर्महिषीः। महिषीभिर्वडवाः[4]। वडवाप्रसवतः प्रभूता अश्वा भविष्यन्ति। तेषां विक्रयात्प्रभूतं सुवर्णं भविष्यति। सुवर्णेन चतुःशालं[5] गृहं संपद्यते। ततः कश्चिद् ब्राह्मणो मम गृहमागत्य प्राप्तवयस्कां[6] रूपाढ्यां कन्यां दास्यति। तत्सकाशात्पुत्रो मे भविष्यति। तस्याहं सोमशर्मेति नाम करिष्यामि। ततस्तस्मिञ्जानुचलनयोग्ये संजातेऽहं पुस्तकं गृहीत्वाश्वशालायाः पृष्ठदेश उपविष्टस्तदवधारयिष्यामि। अत्रान्तरे सोमशर्मा मां दृष्ट्वा जनन्युत्सङ्गाज्जानुप्रचलनपरोऽश्वखुरासन्नवर्ती मत्समीपमागमिष्यति।

१ सक्तुभिः भृष्टयवचणकचूर्णैः। २ भुक्तशेषैः भुक्तावशिष्टैः। ३ नागदन्ते गृहप्रोते दश द्वादश वा अङ्गुलदीर्घे काष्ठखण्डे "खूंटी" इति भाषायाम्। ४ वडवाः अश्वाः। ५ चतुःशालं गृहं चतसृषु दिक्षु शाला गृहाणि यस्य तादृशं गृहम्। ( जिस मकान में चारों तरफ बड़ी २ दालान बनी हो )। ६ प्राप्तवयस्कां युवतीं रूपाढ्यां युवतीं सुन्दरीं।

ततोऽहं ब्राह्मणीं कोपाविष्टोऽभिधास्यामि—'गृहाण तावद्बालकम् ।' सापि गृहकर्मव्यग्रतयास्मद्वचनं न श्रोष्यति । ततोऽहं तमुत्थाय तां पादप्रहारेण ताडयिष्यामि ।' एवं तेन ध्यानस्थितेन तथैव पादप्रहारो दत्तो यथा स घटो भग्नः सक्तुभिः पाण्डुरतां गतः । अतोऽहं ब्रवीमि—'अनागतवतीं चिन्ताम्' इति । सुवर्णसिद्धिराह—'एवमेतत् । कस्ते दोषः । यतः, सर्वोऽपि लोभेन विडम्बितो बाध्यते । उक्तं च—

यो लौल्यात्कुरुते कर्म नैवोदर्कमवेक्षते ।
विडम्बनामवाप्नोति स यथा चन्द्रभूपतिः ॥ ६९ ॥

चक्रधर आह—'कथमेतत् ।' स आह—

# कथा (९)

कस्मिंश्चिन्नगरे चन्द्रो नाम भूपतिः प्रतिवसति स्म । तस्य पुत्रा वानरक्रीडारता वानरयूथं नित्यमेवानेकभोजनभक्ष्यादिभिः पुष्टिं नयन्ति स्म । अथ वानरयूथाधिपो यः स [1]औशनस-बार्हस्पत्य-चाणक्यमतवित्तदनुष्ठाता च तान्सर्वानप्यध्यापयति स्म । अथ तस्मिन्राजगृहे [2]लघुकुमारवाहनयोग्यं मेषयूथमस्ति । तन्मध्यादेको जिह्वालौल्यादहर्निशं निःशङ्कं [3]महानसे प्रविश्य यत्पश्यति तत्सर्वं भक्षयति । ते च [4]सूपकारा यत्किंचित्काष्ठं मृण्मयं भाजनं कांस्यपात्रं ताम्रपात्रं वा पश्यन्ति तेनाशु ताडयन्ति । सोऽपि वानरयूथपस्तद्दृष्ट्वा व्यचिन्तयत्—

१ औशनसेति उशनसा शुक्रेण प्रोक्तं, बार्हस्पत्यं बृहस्पतिना प्रोक्तं चाणक्येन च प्रोक्तं मतं वेत्तीति तथाभूतः, अनेकनीतिशास्त्रतत्त्वज्ञ इत्यर्थः । २ लघ्विति लघूनां क्षुद्राणां, कुमाराणां बालकानां वाहनयोग्यं यानोपयोगि । ३ पाकशालायाम् । ४ सूपकाराः पाककर्तारः ।

'अहो, मेषसूपकारकलहोऽयं वानराणां क्षयाय भविष्यति, यतो[1]ऽन्नास्वादलम्पटोऽयं मेषः, महाकोपाश्च सूपकारा यथासन्नवस्तुना[2] प्रहरन्ति । तद्यदि वस्तुनोऽभावात्कदाचिदुल्मुकेन ताडयिष्यन्ति [3]तदोर्णाप्रचुरोऽयं मेषः स्वल्पेनाऽपि वह्निना प्रज्वलिष्यति । तद्दह्यमानः पुनरश्वकुट्यां समीपवर्तिन्यां प्रवेक्ष्यति । सापि तृणप्राचुर्याज्ज्वलिष्यति । ततोऽश्वा वह्निदाहमवाप्स्यन्ति । [4]शालिहोत्रेण पुनरेतदुक्तम् [5]'यद्वानरवसयाश्वानां वह्निदाहदोषः प्रशाम्यति तन्नूनमेतेन भाव्यमत्र निश्चयः ।' एवं निश्चित्य सर्वान्वानरानाहूय रहसि[6] प्रोवाच—यतः—

'मेषेण सूपकाराणां कलहो यत्र जायते ।
स भविष्यत्यसन्दिग्धं वानराणां क्षयावहः ॥ ७० ॥
तस्मात्स्यात्कलहो यत्र गृहे नित्यमकारणः ॥
तद् गृहं जीवितं वाञ्छन्दूरतः परिवर्जयेत् ॥ ७१ ॥

तथा च—

कलहान्तानि हर्म्याणि कुवाक्यान्तं च सौहृदम् ।
कुराजान्तानि राष्ट्राणि कुकर्मान्तं यशो नृणाम् ॥ ७२ ॥

तन्न यावत्सर्वेषां संक्षयो भवति, तावदेतद्राजगृहं संत्यज्य वनं गच्छामः । अथ तत्तस्य वचनमश्रद्धेयं श्रुत्वा मदोद्धता वानराः प्रहस्य प्रोचुः-'भोः, भवतो[7] वृद्धभावाद् बुद्धिवैकल्यं[8] सञ्जातं, येनैतद् ब्रवीषि । उक्तं च—

---

१ अन्नस्य आस्वादे अत्युत्कण्ठ इत्यर्थः । २ समीपस्थितेन केनचिद्वस्तुना । ३ लोमपूर्णः । ४ शालिहोत्रेण अश्वचिकित्साशास्त्रप्रणेत्रा । ५ वानरवसया वानरमेदसा ( बन्दरों की चर्बी से ) । ६ एकान्ते । ७ वृद्धेति वार्द्धक्यात । ८ बुद्धिभ्रंशः ।

वदनं दशनैर्हीनं लाला स्रवति नित्यशः ।
न मतिः स्फुरति क्वापि बाले वृद्धे विशेषतः ॥ ७३ ॥

न वयं स्वर्गसमानोपभोगान्नानाविधान्भक्ष्यविशेषान्राजपुत्रैः स्वहस्तदत्तानमृतकल्पान्परित्यज्य तत्राटव्यां कषायकटुतिक्तक्षाररूक्षफलानि भक्षयिष्यामः ' तच्छ्रुत्वाश्रुकलुषां[1] दृष्टिं कृत्वा स प्रोवाच—'रे रे मूर्खाः, यूयमेतस्य सुखस्य परिणामं न जानीथ । किं न [2]पापरसास्वादनप्रायमेतत्सुखं परिणामे विषवद्भविष्यति ? तदहं कुलक्षयं स्वयं नावलोकयिष्यामि । सांप्रतं वनं यास्यामि । उक्तं च—

मित्रं व्यसनसंप्राप्तं स्वस्थानं परपीडितम् ।
धन्यास्ते ये न पश्यन्ति देशभङ्गं कुलक्षयम्' ॥ ७४ ॥

एवमभिधाय सर्वांस्तान्परित्यज्य स यूथाधिपोऽटव्यां गतः। अथ तस्मिन्गतेऽन्यस्मिन्नहनि स मेषो महानसे प्रविष्टो यावत्सूपकारेण नान्यत्किञ्चित्समासादितम् ; तावदर्धज्वलितकाष्ठेन ताडयमानो जाज्वल्यमानशरीरः शब्दायमानोऽश्वकुट्यां [3]प्रत्यासन्नवर्तिन्यां प्रविष्टः । तत्र तृणप्राचुर्ययुक्तायां क्षितौ तस्य प्रलुठतः सर्वत्रापि वह्निज्वालास्तथा समुत्थिता यथा केचिदश्वाः स्फुटितलोचनाः पञ्चत्वं गताः, केचिद्बन्धनानि त्रोटयित्वार्धदग्धशरीरा इतश्चेतश्च [4]ह्रेषायमाणा धावमानाः सर्वमपि जनसमूहमाकुलीचक्रुः । अत्रान्तरे राजा सविषादः शालिहोत्रज्ञान् वैद्यानाहूय प्रोवाच—'भोः, प्रोच्यतामेषामश्वानां कश्चिदा-

---

१ अश्रुकलुषां नेत्रजलैराविलाम् । २ पापेति पापस्य दुराचरणस्य यः रसः अनुभवानुरागः, तस्य आस्वादनप्रायम् आस्वादनसदृशम् , आपाततः पापाचरणं सुखजनकम् अपि अन्ते दुःखप्रदमेव भवतीति तात्पर्यार्थः । ३ प्रत्यासन्नवर्तिन्यां समीपस्थायाम् । ४ ह्रेषाध्वनिं कुर्वन्तः ।

होपशमनोपायः ।' तेऽपि शास्त्राणि विलोक्य प्रोचुः—'देव, प्रोक्तमत्र विषये भगवता शालिहोत्रेण । यत्—

कपीनां मेदसा दोषो वह्निदाहसमुद्भवः ।
अश्वानां नाशमभ्येति तमः सूर्योदये यथा ॥ ७५ ॥

तत्क्रियतामेतच्चिकित्सितं [1]द्राक्, यावदेते न दाहदोषेण विनश्यन्ति ।' सोऽपि तदाकर्ण्य समस्तवानरवधमादिष्टवान् । किं बहुना सर्वेऽपि ते वानरा [2]विविधायुधलगुडपाषाणादिभिर्व्यापादिता इति । अथ सोऽपि वानरयूथपस्तं पुत्रपौत्रभ्रातृसुतभागिनेयादिसंक्षयं ज्ञात्वा परं विषादमुपागतः । स त्यक्ताहारक्रियो वनाद्वनं पर्यटति । अचिन्तयच्च—'कथमहं तस्य [3]नृपापसदस्यानृणताकृत्येनापकृत्यं करिष्यामि । उक्तं च—

मर्षयेद्धर्षणां योऽत्र वंशजां परनिर्मिताम् ।
भयाद्वा यदि वा कामात्स ज्ञेयः पुरुषाधमः' ॥ ७६ ॥

अथ तेन वृद्धवानरेण कुत्रचित्पिपासाकुलेन भ्रमता [4]पद्मिनीषण्डमण्डितं सरः समासादितम् । तद्याव[5]त्सूक्ष्मेक्षिकयावलोकयति तावद्वनचरमनुष्याणां पदपंक्तिप्रवेशोऽस्ति, न निष्क्रमणम् । ततश्चिन्तितम् 'नूनमत्र जलान्ते दुष्टग्राहेण भाव्यम् । तत्पद्मिनीनालमादाय दूरस्थोऽपि जलं पिबामि ।' तथानुष्ठिते तन्मध्याद्राक्षसो निष्क्रम्य रत्नमालाविभूषितकण्ठस्तमुवाच—'भोः, अत्र यः सलिले प्रवेशं करोति स मे भक्ष्यः' इति । तन्नास्ति धूर्ततरस्त्वत्समोऽन्यो यः, पानीयमनेन विधिना पिबति।

---

१ द्राक् शीघ्रम् । २ विविधैः अनेकप्रकारैः आयुधैः लगुडैः काष्ठदण्डैः पाषाणादिभिः प्रस्तरादिभिश्च । ३ राजाधमस्य । ४ पद्मिन्याः कमलिन्याः पण्डं समूहः तेन मण्डितं शोभितम् । ५ सूक्ष्मेक्षिकयेति विचारदृष्ट्या पश्यति ।

ततस्तुष्टोऽहम् । प्रार्थयस्व हृदयवाञ्छितम् ।' कपिराह—'भोः कियती ते भक्षणशक्तिः ।' स आह—'शतसहस्रायुतलक्षाण्यपि जलप्रविष्टानि भक्षयामि । [1]बाह्यतः शृगालोऽपि मां दूषयति ।' वानर आह—'अस्ति मे केनचिद्भूपतिना सहात्यन्तं वैरम् । यद्येनां रत्नमालां मे प्रयच्छसि तत्सपरिवारमपि तं भूपतिं वाक्प्रपञ्चेन लोभयित्वात्र सरसि प्रवेशयामि ।' सोऽपि श्रुत्वेत्थं वचस्तस्य श्रुत्वा रत्नमालां दत्त्वा प्राह—'भो मित्र, यत्समुचितं भवति तत्कर्तव्यम्' इति । वानरोऽपि रत्नमालाविभूषितकण्ठो वृक्षप्रासादेषु परिभ्रमञ्जनैर्दृष्टः, पृष्टश्च—'भो यूथप, भवानियन्तं कालं कुत्र स्थितः । भवतेदृग्रत्नमाला कुत्र लब्धा, या दीप्त्या सूर्यमपि तिरस्करोति ।' वानरः प्राह—'अस्ति कुत्रचिदरण्ये गुप्ततरं महत्सरो धनदनिर्मितम् । तत्र सूर्येऽर्धोदिते रविवारे यः कश्चिन्निमज्जति, स धनदप्रसादादीदृग्रत्नमालाविभूषितकण्ठो निःसरति ।' अथ भूभुजा तदाकर्ण्य स वानरः समाहूतः, पृष्टश्च—'भो यूथाधिप, किं सत्यमेतत् । रत्नमालासनाथं सरोऽस्ति क्वापि ।' कपिराह—'स्वामिन्, एष प्रत्यक्षतया मत्कण्ठस्थितया रत्नमालया प्रत्ययस्ते । तद्यदि रत्नमालया प्रयोजनं तन्मया सह कमपि प्रेषय येन दर्शयामि ।' तच्छ्रुत्वा नृपतिराह—'यद्येवं तदहं सपरिजनः स्वयमेष्यामि[2] । येन प्रभूता रत्नमालाः संपद्यन्ते ।' वानर आह—'एवं क्रियताम् ।' तथानुष्ठिते भूपतिना सह रत्नमालालोभेन सर्वे कलत्रभृत्याः प्रस्थिताः । वानरोऽपि राज्ञा दोलाधिरूढेन स्वोत्सङ्ग आरोपितः सुखेन प्रीतिपूर्वमानीयते । अथवा साध्विदमुच्यते—

---

१ बाह्यतः जलाद् बहिस्तु शृगालोऽपि मां पराभवति । २ एष्यामि गमिष्यामि ।

तृष्णे देवि नमस्तुभ्यं यया वित्तान्विता अपि ।
अकृत्येषु नियोज्यन्ते भ्राम्यन्ते दुर्गमेष्वपि ॥ ७७ ॥

तथा च—

इच्छति शती सहस्रं सहस्री लक्षमीहते ।
लक्षाधिपस्तथा राज्यं राज्यस्थः स्वर्गमीहते ॥ ७८ ॥
जीर्यन्ते जीर्यतः केशा दन्ता जीर्यन्ति जीर्यतः ।
जीर्यतश्चक्षुषी श्रोत्रे तृष्णैका तरुणायते ॥ ७९ ॥

अथ तत्सरः समासाद्य वानरः प्रत्यूषसमये राजानमुवाच—'देव, अत्रार्धोदिते सूर्येऽत्र प्रविष्टानां सिद्धिर्भवति । तत्सर्वोऽपि जन एकदैव प्रविशतु । त्वया पुनर्मया सह प्रवेष्टव्यं येन पूर्वदृष्टस्थानमासाद्य प्रभूतास्ते रत्नमाला दर्शयामि ।' अथ प्रविष्टास्ते लोकाः सर्वे भक्षिता राक्षसेन । अथ तेषु चिरायमाणेषु राजा वानरमाह—'भो यूथाधिप, किमिति चिरायते मे जनः ।' तच्छ्रुत्वा वानरः सत्वरं वृक्षमारुह्य राजानमुवाच—'भो दुष्टनरपते, राक्षसेनान्तःसलिलस्थितेन भक्षितस्ते परिजनः । साधितं मया कुलक्षयजं वैरम् । तद्गम्यताम् । त्वं स्वामीति मत्वा नात्र प्रवेशितः । उक्तं च—

कृते प्रतिकृतिं कुर्याद्धिंसिते प्रतिहिंसितम् ।
न तत्र दोषं पश्यामि दुष्टे दुष्टं समाचरेत् ॥ ८० ॥

तत्त्वया मम कुलक्षयः कृतः, मया पुनस्तव' इति । अथैतदाकर्ण्य राजा कोपाविष्टः पदातिरेकाकी यथायातमार्गेण निष्क्रान्तः । अथ तस्मिन्भूपतौ गते राक्षसस्तृप्तो जलान्निष्क्रम्य सानन्दमिदमाह—

हतः शत्रुः कृतं मित्रं रत्नमाला न हारिता ।
नालेनापिबता तोयं भवता साधु वानर' ॥ ८१ ॥

अतोऽहं ब्रवीमि—'यो लौल्यात्कुरुते कर्म' इति ॥ एवमुक्त्वा भूयोऽपि स चक्रधरमाह—'भो मित्र, प्रेषय मां येन स्वगृहं गच्छामि ।' चक्रधर आह—'भद्र आपदर्थे धनमित्रसंग्रहः क्रियते । तन्मामेवंविधं त्यक्त्वा क्व यास्यसि । उक्तं च—

यस्त्यक्त्वा सापदं मित्रं याति निष्ठुरतां सुहृत् ।
कृतघ्नस्तेन पापेन नरके यात्यसंशयम्' ॥ ८२ ॥

सुवर्णसिद्धिराह—'भोः, सत्यमेतद्यदि [1]गम्यस्थाने शक्तिर्भवति । एतत्पुनर्मनुष्याणामगम्यस्थानम् । नास्ति कस्यापि त्वामुन्मोचयितुं शक्तिः । अपरं यथा यथा चक्रभ्रमवेदनया तव मुखविकारं पश्यामि, तथा तथाहमेतज्जानामि यद् द्रागगच्छामि मा कश्चिन्ममाप्यनर्थो भवेदिति । यतः—

यादृशी वदनच्छाया दृश्यते तव वानर ।
विकालेन गृहीतोऽसि यः परैति स जीवति ॥ ८३ ॥

चक्रधर आह—'कथमेतत् ।' सोऽब्रवीत्—

## कथा ( १० )

कस्मिंश्चिन्नगरे भद्रसेनो नाम राजा प्रतिवसति स्म । तस्य सर्वलक्षणसंपन्ना रत्नवती नागकन्यास्ति । तां कश्चिद्राक्षसो [2]जिहीर्षति । रात्रावागत्योपभुङ्क्ते । परं [3]कृतरक्षोपधानां हर्तुं

१ गम्यस्थान इति सुगमप्रदेशे । मित्रं विपदः मोचयितुं यदि शक्तिर्भवति तदा सुहृदा सुहृद् न त्यक्तव्यः । २ हर्तुमिच्छति । ३ कृतेति कृतं रक्षायै उपधानम् उपबर्हः रक्षोनिवारणार्थं मन्त्रपूतं तन्त्रशास्त्रोक्तेन विधिना सिद्धयोगे उत्पाटितं वृक्षमूलपल्लवाद्यौषधपूर्णं शिरोनिधानं यस्याः सा ताम् ।

न शक्नोति । सापि तत्समग्रे रक्षःसांनिध्यजामवस्थामनुभवति कम्पादिभिः । एवमतिक्रामति काले कदाचित्स राक्षसो मध्यनिशायां गृहकोणे स्थितः । सापि राजकन्या स्वसखीमुवाच—'सखि, पश्यैष [1]विकालः समये नित्यमेव मां [2]कदर्थयति । अस्ति तस्य दुरात्मनः प्रतिषेधोपायः कश्चित् ।' तच्छ्रुत्वा राक्षसोऽपि व्यचिन्तयत्—नूनं यथाहं तथान्योऽपि कश्चिद्विकालनामास्या हरणाय नित्यमेवागच्छति परं सोऽप्येनां हर्तुं न शक्नोति । तत्तावदश्वरूपं कृत्वाश्वमध्यगतो निरीक्षयामि किंरूपः स किंप्रभावश्चेति । एवं राक्षसोऽश्वरूपं कृत्वाश्वानां मध्ये तिष्ठति । तथानुष्ठिते निशीथसमये राजगृहे कश्चिदश्वचौरः प्रविष्टः । स च सर्वानश्वानवलोक्य तं राक्षसमश्वतमं विज्ञायाधिरूढः । अत्रान्तरे राक्षसश्चिन्तयामास—'नूनमेष विकालनामा मां चौरं मत्वा कोपान्निहन्तुमागतः । तत्किं करोमि ।' एवं चिन्तयन्सोऽपि [3]तेन [4]खलीनं मुखे निधाय क[5]शाघातेन ताडितः । अथासौ भयत्रस्तमनाः प्रधावितुमारब्धः । चौरोऽपि दूरं गत्वा [6]खलीनाकर्षणेन तं स्थिरं कर्तुमारब्धवान् । स तु केवलं वेगाद्वेगतरं गच्छति । अथ तं तथा[7]ऽगणितखलीनाकर्षणं मत्वा चौरश्चिन्तयामास—'अहो, नैवंविधा वाजिनो भवन्त्यगणितखलीनाः । तन्नूनमनेनाश्वरूपेण राक्षसेन

---

१ विशेषेण कालः यमस्वरूपः विकराल इत्यर्थः । २ कदर्थयति क्लेशयति । ३ तेन अश्वचौरेण । ४ खलीनं कविकाम् ( घोड़े के मुंह में दिया जानेवाला लोहे का टुकड़ा ) । ५ कशाघातेन अश्वादीनां ताडनोपकरणं वस्तु ( चाबुक ) । ६ खलीनस्य कविकायाः ( घोड़ों के मुंह में दिया हुआ लोहे का टुकड़ा जिसमें लगाम बांधी जाती है ) । आकर्षणं तेन । ७ अगणितं नोपलक्षितं उपेक्षितमित्यर्थः खलीनेन स्वमुखसम्बद्ध- रज्ज्वा आकर्षणं येन तथाभूतम् ।

भवितव्यम् । तद्यदि कञ्चित्पांशुलं[1] भूमिदेशमवलोकयामि, तदात्मानं तत्र पातयामि[2] । नान्यथा मे जीवितव्यमस्ति । एवं चिन्तयत इष्टदेवतां स्मरतस्तस्य सोऽश्वो वटवृक्षस्य तले निष्क्रान्तः[3] । चौरोऽपि [4]वटप्ररोहमासाद्य तत्रैव विलग्नः । ततो द्वावपि तौ पृथग्भूतौ परमानन्दभाजौ जीवितविषये लब्धप्रत्याशौ संपन्नौ । अथ तत्र वटे कश्चिद्राक्षससुहृद्वानरः स्थित आसीत् । तेन राक्षसं त्रस्तमालोक्य व्याहृतम्—'भोः मित्र, किमेवं पलाय्यतेऽलीकभयेन । त्वद्भक्ष्योऽयं मानुषः । भक्ष्यताम् ।' सोऽपि वानरवचो निशम्य स्वरूपमाधाय शङ्कितमनाः स्खलितगतिर्निवृत्तः । चौरोऽपि तं वानराहूतं ज्ञात्वा कोपात्तस्य लाङ्गूलं लम्बमानं मुखे निधाय चर्वितवान्, वानरोऽपि तं राक्षसाभ्यधिकं मन्यमानो भयान्न किंचिदुक्तवान्, केवलं व्यथार्तो निमीलितनयनस्तिष्ठति । राक्षसोऽपि तं तथाभूतमवलोक्य श्लोकमेनमपठत्—

यादृशी वदनच्छाया दृश्यते तव वानर ।
विकालेन गृहीतोऽसि यः परैति स जीवति ॥ ८४ ॥

उक्त्वा प्रनष्टश्च । तत्प्रेषय मां येन गृहं गच्छामि । त्वं पुनरनुभुङ्क्ष्वात्र स्थित एव लोभवृक्षफलम् ।' चक्रधरः प्राह—'भोः, अकारणमेतत् । दैववशात्संपद्यते नृणां शुभाशुभम् । उक्तं च—

दुर्गस्त्रिकूटः परिखा समुद्रो
रक्षांसि योधा धनदाच्च वित्तम् ।
शास्त्रं च यस्योशनसा प्रणीतं
स रावणो दैववशाद्विपन्नः ॥ ८५ ॥

---

१ पांशुलं धूलिव्याप्तम् । २ धूलिप्रचुरप्रदेशे पतनेन शरीरे आघातो न भवतीति भावः । ३ समागतः । ४ वटप्ररोहं वटवृक्षस्य अङ्कुरम् ।

तथा च—

अन्धकः कुब्जकश्चैव त्रिस्तनी राजकन्यका।
त्रयोऽप्यन्यायतः सिद्धाः संमुखे कर्मणि स्थिते॥ ८६॥

सुवर्णसिद्धिः प्राह—'कथमेतत्।' सोऽब्रवीत्—

## कथा ( ११ )

अस्त्युत्तरापथे मधुपुरं नाम नगरम्। तत्र मधुसेनो नाम राजा बभूव। तस्य कदाचिद्विषयसुखमनुभवतस्त्रिस्तनी कन्या बभूव। अथ तां त्रिस्तनीं जातां श्रुत्वा स राजा कञ्चुकिनः प्रोवाच—'यद्भोः, त्यज्यतामियं त्रिस्तनी, गत्वा दूरेऽरण्ये यथा कश्चिन्न जानाति। तच्छ्रुत्वा कञ्चुकिनः प्रोचुः—'महाराज, ज्ञायते यदनिष्टकारिणी त्रिस्तनी कन्या भवति। तथापि ब्राह्मणा आहूय प्रष्टव्या येन लोकद्वयं न [1]विरुध्यते। यतः—

यः सततं परिपृच्छति शृणोति संधारयत्यनिशम्।
तस्य दिवाकरकिरणैर्नलिनीव विवर्धते बुद्धिः॥ ८७॥

तथा च—

पृच्छकेन सदा भाव्यं पुरुषेण विजानता।
राक्षसेन्द्रगृहीतोऽपि प्रश्नान्मुक्तो द्विजः पुरा॥ ८८॥

राजा आह—'कथमेतत्।' ते प्रोचुः—

## कथा ( १२ )

देव, कस्मिंश्चिद्वनोद्देशे चण्डकर्मा नाम राक्षसः प्रतिवसति स्म। एकदा तेन भ्रमताटव्यां कश्चिद् ब्राह्मणः समासादितः।

१ अस्मिल्लोके निन्दा न भवेत् परलोके च नरकप्राप्तिः न स्यादिति भावः।

ततस्तस्य स्कन्धमारुह्य प्रोवाच—'भोः; अग्रसरो गम्यताम् ।' ब्राह्मणोऽपि भयत्रस्तमनास्तमादाय प्रस्थितः । अथ तस्य कमलोदरकोमलौ पादौ दृष्ट्वा ब्राह्मणो राक्षसमपृच्छत्—भोः, किमेवंविधौ ते पादावतिकोमलौ ।' राक्षस आह—'भोः, व्रतमस्ति । नाहमार्द्रपादो भूमिं स्पृशामि । ततस्तच्छ्रुत्वात्मनो मोक्षोपायं चिन्तयन्सरः प्राप्तः । ततो राक्षसेनाभिहितम्—'भोः, यावदहं स्नानं कृत्वा देवतार्चनविधिं विधायागच्छामि तावत्त्वयातः स्थानादन्यत्र न गन्तव्यम् ।' तथानुष्ठिते द्विजश्चिन्तयामास—'नूनं देवतार्चनविधेरूर्ध्वं मामेष भक्षयिष्यति । तद् द्रुततरं गच्छामि, येनैष आर्द्रपादो न मम पृष्ठमेष्यति । तथानुष्ठिते राक्षसो व्रतभङ्गभयात्तस्य पृष्ठं न गतः । अतोऽहं ब्रवीमि—पृच्छकेन सदा भाव्यम्' इति । अथ तेभ्यस्तच्छ्रुत्वा राजा द्विजानाहूय प्रोवाच—'भो ब्राह्मणाः, त्रिस्तनी मे कन्या समुत्पन्ना । तत्किं तस्याः प्रतिविधानमस्ति न वा ।' ते प्रोचुः—'देव' श्रूयताम् ।

हीनाङ्गी वाधिकाङ्गी वा या भवेत्कन्यका नृणाम् ।
भर्तुः स्यात्सा विनाशाय स्वशीलनिधनाय च ॥ ८९ ॥
या पुनस्त्रिस्तनी कन्या याति लोचनगोचरम् ।
पितरं नाशयत्येव सा द्रुतं नात्र संशयः ॥ ९० ॥

तस्मादस्या दर्शनं परिहरतु देवः । तथा यदि कश्चिदुद्वाहयति, तदेनां तस्मै दत्त्वा देशत्यागेन नियोजयितव्य इति । एवं कृते लोकद्वयाविरुद्धता भवति ।' अथ तेषां तद्वचनमाकर्ण्य स राजा पटहशब्देन सर्वत्र घोषणामाज्ञापयामास—'अहो त्रिस्तनीं राजकन्यां यः कश्चिदुद्वाहयति स सुवर्णलक्षमाप्नोति, देशत्यागं च ।' एवं तस्यामाघोषणायां क्रियमाणायां महान्कालो व्यतीतः। न कश्चित्तां प्रतिगृह्णाति । सापि यौवनोन्मुखी संजाता

सुगुप्तस्थानस्थिता यत्नेन रक्ष्यमाणा तिष्ठति । अथ तत्रैव नगरे कश्चिदन्धस्तिष्ठति । तस्य च मन्थरकनामा कुब्जोऽग्रेसरो यष्टिग्राही । ताभ्यां तं पटहशब्दमाकर्ण्य मिथो मन्त्रितम्—[1]'स्पृश्यतेऽयं पटहः । यदि कथमपि दैवात्कन्या लभ्यते, तदा सुवर्णप्राप्तिश्च भवति । सुखेन सुवर्णप्राप्त्या कालो व्रजति । अथ यदि तस्या दोषतो मृत्युर्भवति, दारिद्र्योपात्तस्यास्य क्लेशस्य [2]पर्यन्तो भवति । उक्तं च—

लज्जा स्नेहः स्वरमधुरता बुद्धयो यौवनश्रीः
कान्तासङ्गः स्वजनममता दुःखहानिर्विलासः ।
धर्मः शास्त्रं सुरगुरुमतिः शौचमाचारचिन्ता
पूर्णे सर्वे जठरपिठरे प्राणिनां संभवन्ति' ॥ ९१ ॥

एवमुक्त्वान्धेन गत्वा स पटहः स्पृष्टः—'भोः' अहं तां कन्यामुद्वाहयामि यदि राजा मे प्रयच्छति ।' ततस्तै राजपुरुषैर्गत्वा राज्ञे निवेदितम्—'देव, अन्धकेन केनचित्पटहः स्पृष्टः । तदत्र विषये देवः प्रमाणम् ।' राजा प्राह---

अन्धो वा बधिरो वापि कुष्ठी वाप्यन्त्यजोऽपि वा ।
प्रतिगृह्णातु तां कन्यां सलक्षां स्याद्विदेशजः' ॥ ९२ ॥

अथ राजादेशात्तै रक्षापुरुषैस्तं नदीतीरे नीत्वा सुवर्णलक्षेण समं विवाहविधिना त्रिस्तनीं तस्मै दत्त्वा [3]जलयाने विधाय [4]कैवर्ताः प्रोक्ताः—'भोः' देशान्तरं नीत्वा कस्मिंश्चिदधिष्ठानेऽन्धः सपत्नीकः कुब्जकेन सह [5]मोचनीयः ।' तथानुष्ठिते विदेशमासाद्य कस्मिंश्चिदधिष्ठाने कैवर्तदर्शिते त्रयोऽपि मूल्येन गृहं प्राप्ताः सुखेन कालं नयन्ति स्म । केवलमन्धः पर्यङ्के सुप्त-

१ घोष्यत इतिभावः । २ शेष इत्यर्थः । ३ नौकायाम् । ४ कैवर्ताः धीवराः (मल्लाह) ५ मोचनीयः त्यक्तव्यः ।

स्तिष्ठति। गृहव्यापारं मन्थरकः करोति। एवं गच्छता कालेन त्रिस्तन्याः कुब्जकेन सह [1]विकृतिः समपद्यत। अथवा साध्विदमुच्यते—

यदि स्याच्छीतलो वह्निश्चन्द्रमा दहनात्मकः।
सुस्वादसागरः स्त्रीणां तत्सतीत्वं प्रजायते ॥ ९३ ॥

अथान्येद्युस्त्रिस्तन्या मन्थरकोऽभिहितः—'भो, सुभग, यद्येषोऽन्धः कथञ्चिद् व्यापाद्यते, तदावयोः सुखेन कालो याति। तदन्विष्यतां कुत्रचिद्विषम्, येनास्मै तत्प्रदाय सुखिनी भवामि।' अन्यदा कुब्जकेन परिभ्रमता मृतः कृष्णसर्पः प्राप्तः। तं गृहीत्वा प्रहृष्टमना गृहमभ्येत्य तामाह—'सुभगे, लब्धोऽयं कृष्णसर्पः। तदेनं खण्डशः कृत्वा [2]प्रभूतशुण्ठयादिभिः संस्कार्यास्मै विकलनेत्राय मत्स्यामिषं भणित्वा प्रयच्छ, येन द्राग्विनश्यति। यतोऽस्य मत्स्यस्यामिषं सदा प्रियम्।' एवमुक्त्वा मन्थरको बाह्ये गतः। सापि प्रदीप्ते वह्नौ कृष्णसर्पं खण्डशः कृत्वा तक्रमादाय गृहव्यापाराकुला तं विकलाक्षं सप्रश्रयमुवाच—आर्यपुत्र तवाभीष्टं मत्स्यमांसं समानीतम्, यतस्त्वं सदैव तत्पृच्छसि। ते च मत्स्या वह्नौ पाचनाय तिष्ठन्ति। तद्यावदहं गृहकृत्यं करोमि, तावत्त्वं [3]दर्वीमादाय क्षणमेकं तान्प्रचालय।' सोऽपि तदाकर्ण्य हृष्टमनाः [4]सृक्कणी परिलिहन्द्रुतमुत्थाय दर्वीमादाय प्रमथितुमारब्धः। अथ तस्य मत्स्यान्मथ्नतो विषगर्भबाष्पेण संस्पृष्टं नीलपटलं चक्षुर्भ्यामगलत्। असावप्यन्धो बहुगुणं मन्यमानो विशेषान्नेत्राभ्यां बाष्पग्रहणमकरोत्। ततो लब्धदृष्टिर्जातो यावत्पश्यति तावत्तक्रमध्ये कृष्णसर्प-

---

१ विकृतिः व्यभिचारः। २ प्रभूतेति—प्रभूतैः शुण्ठीप्रभृतिकाष्ठौषधिद्रव्यैः संस्कार्य पाचयित्वा। ३ पाकद्रव्यप्रचालनयन्त्रम् (कलछुल) ४ औष्ठप्रान्तौ।

खण्डानि केवलान्येवावलोकयति । ततो व्यचिन्तयत्—'अहो' किमेतत् मम मत्स्यामिषं कथितमासीदनया । एतानि तु कृष्णसर्पखण्डानि । तत्तावद्विजानामि सम्यक् त्रिस्तन्याश्चेष्टितं किं मम वधोपायक्रमः कुब्जस्य वा । उताहो अन्यस्य वा कस्यचित् ।' एवं विचिन्त्य स्वाकारं [1]गूहन्नन्धवत्कर्म करोति यथा पुरा । अत्रान्तरे कुब्जः समागत्य निःशङ्कतयालिङ्गनचुम्बनादिभिस्त्रिस्तनीं सेवितुमुपचक्रमे । सोऽप्यन्धस्तमवलोकयन्नपि यावन्न किंचिच्छस्त्रं पश्यति, तावत्कोपव्याकुलमनाः पूर्ववच्छयनं गत्वा कुब्जं चरणाभ्यां संगृह्य सामर्थ्यात्स्वमस्तकोपरि भ्रामयित्वा त्रिस्तनीं हृदये व्यताडयत् । अथ कुब्जप्रहारेण तस्यास्तृतीयः स्तन उरसि प्रविष्टः । तथा बलान्मस्तकोपरि भ्रामणेन कुब्जः [2]प्राञ्जलतां गतः । अतोऽहं ब्रवीमि—'अन्धकः कुब्जकश्चैव' इति । सुवर्णसिद्धिराह—'भोः, सत्यमेतत् । दैवानुकूलतया सर्वं कल्याणं संपद्यते । तथापि पुरुषेण सतां वचनं कार्यम् । न पुनरेवमेव असंहतेन कदाचिदपि भवितव्यम् । यः खलु एवमेव वर्तते स त्वमिव नूनं विनश्यति । तथा च—

एकोदराः पृथग्ग्रीवा अन्योन्यफलभक्षिणः ।
असंहता विनश्यन्ति भारण्डा इव पक्षिणः ॥ ९४ ॥

चक्रधर आह—'कथमेतत् ।' सोऽब्रवीत्—

## कथा ( १३ )

कस्मिंश्चित्सरोवरे भारण्डनामा पक्ष्येकोदरः पृथग्ग्रीवः प्रतिवसति स्म । तेन च समुद्रतीरे परिभ्रमता किंचित्फलममृतकल्पं तरङ्गाक्षिप्तं संप्राप्तम् । सोऽपि भक्षयन्निदमाह—'अहो,

१ आत्मानम् अप्रकाशयन् । २ सरलतां, कुब्जदोषरहितोऽभवदित्यर्थः ।

बहूनि मयामृतप्रायाणि समुद्रकल्लोलाहृतानि फलानि भक्षितानि। परमपूर्वोऽस्यास्वादः। तत्किं पारिजातहरिचन्दनतरुसंभवम्। किं वा किंचिदमृतमयफलमव्यक्तेनापि विधिनापतितम्।' एवं तस्य ब्रुवतो द्वितीयमुखेनाभिहितम्—'भोः' यद्येवं तन्ममापि [1]स्तोकं प्रयच्छ, येन जिह्वासौख्यमनुभवामि।' ततो विहस्य प्रथमवक्त्रेणाभिहितम्—'आवयोस्तावदेकमुदरम्, एका तृप्तिश्च भवति। ततः किं पृथग्भक्षितेन। वरमनेन शेषेण प्रिया तोष्यते।' एवमभिधाय तेन शेषं [2]भारण्ड्याः प्रदत्तम्। सापि तदास्वाद्य प्रहृष्टतमालिङ्गनचुम्बनसंभावनानेकचाटुपरा च बभूव। द्वितीयं मुखं तद्दिनादेव प्रभृति सोद्वेगं सविषादं च तिष्ठति। अथान्येद्युः द्वितीयमुखेन विषफलं प्राप्तम्। तद् दृष्ट्वा-परमाह—'भो [3]निस्त्रिंशपुरुषाधम निरपेक्ष, मया विषफलमासादितम्। तत्तवापमानाद्भक्षयामि।' अपरेणाभिहितम्—'मूर्ख, मा मैवं कुरु। एवं कृते द्वयोरपि विनाशो भविष्यति।' अथैवं वदता तेनापमानेन फलं भक्षितम्। किं बहुना। द्वावपि विनष्टौ। अतोऽहं ब्रवीमि—'एकोदराः पृथग्ग्रीवाः' इति॥

चक्रधर आह—'सत्यमेतत्। तद्गच्छ गृहम्। परमेकाकिना न गन्तव्यम्। उक्तं च—

एकः स्वादु न भुञ्जीत नैकः सुप्तेषु जागृयात्।
एको न गच्छेदध्वानं नैकश्चार्थान्प्रचिन्तयेत्॥ ९५॥

अपि च—

अपि कापुरुषो मार्गे द्वितीयः क्षेमकारकः।
कर्कटेन द्वितीयेन जीवितं परिरक्षितम्॥ ९६॥

सुवर्णसिद्धिराह—'कथमेतत्।' सोऽब्रवीत्—

---

१ स्तोकं स्वल्पम्। २ स्वप्रियायाः। ३ निस्त्रिंशः खड्गः, तत्तुल्यः अतिकठोरः, पुरुषेषु अधमः तत्सम्बुद्धौ।

# कथा ( १४ )

कस्मिंश्चिदधिष्ठाने ब्रह्मदत्तनामा ब्राह्मणः प्रतिवसति स्म । स च प्रयोजनवशाद् ग्रामे प्रस्थितः स्वमात्राभिहितः—'यद्वत्स, कथमेकाकी व्रजसि । तदन्विष्यतां कश्चिद् द्वितीयः सहायः ।' स आह—'अम्ब, मा भैषीः । निरुपद्रवोऽयं मार्गः । कार्यवशादेकाकी गमिष्यामि ।' अथ तस्य तं निश्चयं ज्ञात्वा समीपस्थवाप्याः [1]सकाशात्कर्कटमादाय मात्राभिहितः—'वत्स, अवश्यं यदि गन्तव्यं तदेष कर्कटोऽपि सहायो भवतु । तदेनं गृहीत्वा गच्छ ।' सोऽपि मातुर्वचनादुभाभ्यां पाणिभ्यां तं संगृह्य कर्पूरपुटिकामध्ये निधाय पात्रमध्ये संस्थाप्य शीघ्रं प्रस्थितः । अथ गच्छन्ग्रीष्मोष्मणा संतप्तः कंचिन्मार्गस्थवृक्षमासाद्य तत्रैव प्रसुप्तः । अत्रान्तरे वृक्षकोटरान्निर्गत्य सर्पस्तत्समीपमागतः । सच कर्पूरसुगन्धसहजप्रियत्वात्तं परित्यज्य वस्त्रं विदार्याभ्यन्तरगतां कर्पूरपुटिकामतिलौल्यादभक्षयत् । सोऽपि कर्कटस्तत्रैव स्थितः सन् सर्पप्राणानपाहरत् । ब्राह्मणोऽपि यावत्प्रबुद्धः पश्यति तावत्समीपे मृतः कृष्णसर्पो निजपार्श्वे कर्पूरपुटिकोपरि स्थितस्तिष्ठति तं दृष्ट्वा व्यचिन्तयत्—'कर्कटेनायं हतः' इति प्रसन्नो भूत्वाब्रवीत्—'भोः, सत्यमभिहितं मम मात्रा यत्पुरुषेण कोऽपि सहायः कार्यः, नैकाकिना गन्तव्यम् । यतो मया श्रद्धापूरितचेतसा तद्वचनमनुष्ठितम्, तेनाहं कर्कटेन सर्पव्यापादनाद्रक्षितः । अथवा साध्विदमुच्यते—

क्षीणः स्रवति शशी रविवृद्धौ वर्धयति पाथसां नाथम् ।
अन्ये विपदि सहाया धनिनां श्रियमनुभवन्त्यन्ये ॥ ६७ ॥

---

१ कर्कटम् कुलीरं ( केकड़ा ) ।

मन्त्रे तीर्थे द्विजे देवे दैवज्ञे भेषजे गुरौ ।
यादृशी भावना यस्य सिद्धिर्भवति तादृशी' ॥ ९८ ॥

एवमुक्त्वासौ ब्राह्मणो [1]यथाभिप्रेतं गतः । अतोऽहं ब्रवीमि—'अपि कापुरुषो मार्गे' इति । एवं श्रुत्वा सुवर्णसिद्धिस्तमनुज्ञाप्य स्वगृहं प्रतिनिवृत्तः ॥

इति श्रीविष्णुशर्मविरचिते पञ्चतन्त्रकेऽपरीक्षितकारकं नाम पञ्चमं तन्त्रं समाप्तम् ।



समाप्तमिदं पञ्चतन्त्रकम् ।





१ स्वाभिलषितम् ।

# विक्रयार्थ-प्रस्तुत-पुस्तकें।

(१) रघुवंश (१-५) सुबोधिनी टीका, २० वर्ष सन् १९३० तक के प्रश्नपत्र सहित ... ॥)
(२) रघुवंश (षष्ठादि दशमसर्गपर्यन्त) मल्लिनाथी टीका तथा पद्यात्मक संक्षिप्तकथाभाग सहित ...
(३) श्रुतबोध अश्लीलपदपरिवर्तित सोदाहरण सुबोधिनी टीका सहित, कन्याओं के और बालकों के अत्यन्त उपयोगी तथा नवीन नियमावली के अनुसार प्रथमा परीक्षा में पढ़ने योग्य, मूल्य केवल ... )
(४) रामायण-महाभारत सुबोधिनी टीका सहित ... )
(५) किरातार्जुनीय १-२ सर्ग केवल मल्लिनाथी टीका, पद परिवर्तन, सरलार्थ, पात्रपरिचयादि सहित ... )
(६) पञ्चतन्त्र टिप्पणी सहित सम्पूर्ण ... ... )
(७) पञ्चतन्त्र प्रथमतन्त्र टिप्पणी सहित ... ...
(८) पञ्चतन्त्र द्वितीयतन्त्र ,, ,, ... ...
(९) पञ्चतन्त्र तृतीयतन्त्र ,, ,, .... ...
(१०) पञ्चतन्त्र चतुर्थतन्त्र ,, ,, .... ....
(११) पञ्चतन्त्र अपरीक्षित कारक मात्र ... ....
(१२) पञ्चतन्त्र अपरीक्षित कारक भाषाटीका एवं अनुवाद चन्द्रिका सहित, इसमें हिन्दी और संस्कृत व्याकरण के सूत्र को बड़ी ही सरल भाषा में समझाया गया है और अनुवाद करने का तरीका समझाने के लिये अत्यन्त सरल [illegible] का अवलम्बन किया गया है। प्रथमा परीक्षार्थियों के लिये अत्यधिक उपयोगी है। (यन्त्रस्थ)

मैनेजर—शारदा-भवन, ६३ अगस्तकुण्ड—बनारस।